Editor :—Prof. P. V. RAMANUJASWAMI, M.A.

# PRAPANNAPARIJATAM

OF

## SRI VATSYA VARADACHARYA

ALIAS

## NADADUR AMMAL

EDITED

WITH INTRODUCTION, NOTES, ETC.

BY

SAHITYA NYAYA VEDANTA SIROMANI, VIDVAN

T. K. V. N. SUDARSANACHARYA

Assistant Editor

Sri Vaishnava Sampradaya Granthamala

Sri Venkatesvara Oriental Institute

PUBLISHED UNDER THE AUTHORITY OF

SRI C. ANNA RAO, B.A.

EXECUTIVE OFFICER

*half of the Board of Trustees, T. T. Devasthanams, Tirupati*

4780







1954

PRINTED AT

TIRUMALA-TIRUPATI DEVASTHANAMS PRESS

TIRUPATI

श्रीवैष्णवसम्प्रदायग्रन्थमाला सं. ४.

संपादकः — श्रीपरवस्तु वेङ्कटरामानुजस्वामी, एम्. ए.
श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयाध्यक्षः

श्रीमद्वरदाचार्यमहागुरुभिरनुगृहीतः

# प्रपन्नपारिजातः

उपोद्घात — टिप्पणीकादिभिस्सहितः



श्रीवैष्णवसम्प्रदायग्रन्थमालासहायसम्पादकेन
साहित्य-न्याय-वेदान्तशिरोमणिना
उभयवेदान्तविदुषा
ति. कु. वें. न. सुदर्शनाचार्येण
संपादितः



श्री तिरुमल - तिरुपति देवस्थानमुद्रणालये
मुद्रितः

१९५४

श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते वरदार्यमहागुरवे नमः

# ॥ प्रस्तावना ॥

ॐ नमो वेङ्कटेशाय जगन्मङ्गलभूमये ।
कृपया दिशते स्वाङ्घ्री प्रपत्तव्यौ स्वपाणिना ॥

नमः श्रीभाष्यकाराय प्रपत्त्यमृतवर्षिणे ।
कृपाप्रसन्नगुरवे वेदान्ताम्बुधिसेतवे ॥

नमोऽस्तु वरदार्याय प्रपन्नाब्जविवस्वते ।
वरदाय पयोदाय श्रीभाष्यामृतवर्षिणे ॥

अखिलप्रपन्नजनविमलमङ्गलमनोरथपरिपूरणपारिजातोऽसौ प्रपन्नपारिजातः, प्रपन्नपारिजातस्य परमकारुणिकस्य भगवतः श्रीनिकेतनस्य अमलमङ्गलकरुणाकटाक्ष-वीक्षणप्रसरणमहिम्ना संगुम्भितायामस्यां अस्मदीयश्रीवैष्णवसम्प्रदायग्रन्थमालायां, वरीवर्ति सर्वाङ्गीणरमणीयं परमवरणीयं गुणपञ्चकपरिमिलितं प्रसन्नमधुरपरिमल-परिमेदुरं पञ्चमं प्रसूनम् ।

## ग्रन्थप्रशस्तिः

जयति सर्वस्वमिवेदं श्रीमत्, श्रीभगवद्रामानुजमुनिपुङ्गवसंप्रतिष्ठापितस्य सकलप्राणिहितङ्करस्य नित्यनिरवद्यनिगमनिगमान्तादिप्रमाणप्रदीपसमुल्लासितस्य श्री-मतोऽस्य सर्वदर्शनशिरोमणिभूतस्य औपनिषदशुद्धान्तसिद्धान्तस्य श्रीमद्विशिष्टाद्वैत-दर्शनकल्पमहीरुहस्य ।

परमविलक्षणस्य उपादेयतमस्य अस्य प्रबन्धरत्नस्य सम्पादनेन कृतार्थम्मन्या वयं मोमुद्यामहे । विलक्षणदेशविशिष्टविशिष्टब्रह्मानन्दानुभवरूपस्य मोक्षसाम्राज्यस्य

संप्राप्तौ परमोपायभूतस्य परमपुरुषप्रसादस्य प्रसाधने अत्यन्तं अन्तरङ्गभूतस्य प्रपत्त्युपायस्य प्रमाणलक्षणस्वरूपफलविशेषादिकं निखिलनिगमनिगमान्तरहस्यं सर्वमपि विषयजातं ललितोचितसन्निवेशरम्येण मृदुमधुरसंस्कृतमयपदबन्धसन्दर्भेण सर्वेषामपि करतलामलकयतः प्रबन्धतल्लजस्यास्य प्रकाशनं, मन्यामहे, सर्वेषामपि सहृदयमहोदयानां महते प्रमोदाय प्रभवतीति ।

## ग्रन्थकारप्रशस्तिः

प्रबन्धतल्लजस्यास्य प्रणेतारः — परमविलक्षणप्रतिभाप्रभावसमुद्भिन्नसर्वतन्त्रस्वातन्त्र्याः, नित्यानवद्यहृद्यदिव्यकल्याणगुणगणचारित्रादिविभूषिताः, विशिष्टानुष्ठाननिष्ठागरिष्ठाः, श्रीमद्विशिष्टाद्वैतसिद्धान्तविजयध्वजायमानाः, श्रीवत्सवंशकलशोदधिपूर्णचन्द्राः, ' नडादूर् अम्माळ् ' इति द्राविडभाषायां प्रसिद्धतमपवित्रदिव्यनामधेयाः श्रीमद्वरदाचार्यमहागुरवः ।

एते च आचार्यवर्याः, श्रुत्यन्तद्वयपीठदेशिकमणीनां श्रीदेवराजभगवदत्यन्तप्रियतमे ' नल्लान् ' इति द्राविडभाषायां प्रसिद्धतमे श्रीमति श्रीवत्समहर्षिदिव्यवंशे कृतावतरणानां सन्ततसन्तन्यमानश्रीमद्देवराजभगवद्दिव्यकैङ्कर्यधुरंधराणां श्रीमद्यतिबृन्दारकसार्वभौमप्रियभागिनेयानां श्रीमच्छ्रीभाष्यसिंहासनमधितस्थुषां " नडादूर् आळ्वान् " इति द्राविडभाषायां सुप्रसिद्धानां अभ्यर्हिततमानां ' कुलपति ' बिरुदभाजां श्रीमद्वरदविष्णवाचार्यवर्याणां पौत्राः, मत्तप्रतिवादिवारणप्रकटाटोपविमर्दनक्षमाणां वादाहवविजितप्रत्यर्थिदार्शनिकसंघप्रदत्तानेकविधबिरुदावलीविराजमानानां श्रीमदुभयवेदान्तकुलान्वयरत्नदीपानां श्रीमद्देवराजगुरुचरणानां पुत्राश्च ।

यथाहुरभियुक्ताः—

श्रुत्यन्तद्वयपीठदेशिकमणिः श्रीवत्सवंशाग्रणीः
श्रीरामानुजभागिनेय इति यः ख्यातः क्षमामण्डले ।
स श्रीहस्तिगिरीशसेवनपरः प्रत्यस्तबाह्यागमो
माहाकारुणिकैर्गुणैर्वरदविष्ण्वाख्योचितैरेधते ॥

तस्यासीत्तनयस्त्रिविष्टपतटिन्युद्दामदोराहवैः
वादैर्भग्नमतान्तरक्षितिरुहैस्संदर्शनं दर्शयन् ।
उद्धूतप्रतिवादिदत्तबिरुदस्तोमस्समानाधिक-
त्यक्तग्रन्थसहस्रकृत् गुणनिधिः श्रीदेवराजो गुरुः ॥

पुत्रस्तस्य करीन्द्रदिव्यकरुणापात्रस्य विद्वन्मणेः
योगीन्द्रप्रियभागिनेयसुधियः पौत्रः पवित्रात्मनः ।
श्रीभाष्यप्रमुखप्रदीपसततारोपैरपास्य स्तमः
सामस्त्यां वरदाह्वयो विजयते वत्सान्वयो देशिकः ॥ इति ।

## ग्रन्थकर्तॄणां अभिजनविद्यासम्पत्तिः

श्रियः पत्युरत्यन्तप्रियतमे मुक्तिफलदे श्रीमति सत्यव्रतक्षेत्रे श्रीमद्देवाधिनाथ-
ागवन्नित्यकैङ्कर्यनिर्वहणैकतानसकलविधकरणप्रवृत्तयः, परमात्मनि रक्ताः, अन्यत्रात्यन्तं
ेरक्ताः, भगवदत्यन्तप्रीतिपात्रभूताः "नल्लान्" (साधुः) इति भगवदनुगृहीत-
ननितरसाधारणबिरुदभूषणाः श्रीवत्सकुलतिलकायमानाः 'महाकारुणिकः" इति
ाथिता आचार्यवर्याः प्रशस्तां परमपावनां काञ्चीपुरीमध्यवात्सुः ।

ते च तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणां मनोहरां महितमङ्गलगुणालयां
श्रीमद्रामानुजार्यप्रियभगिनीं कमलानाम्नीं कन्यकामुपयेमिरे ।

सहधर्मचारिण्या तया सह गार्हस्थ्यमादर्शभूतमनुभवत्सु तेष्वाचार्यवर्येषु,
ाच्छति च कस्मिंश्चित् काले, प्रपन्नजनभागधेयपरिपाकवैभवेन, भगवतः श्रीमतो
ारदराजस्य निर्हेतुकनिरवधिककृपात्रभावबलेन च सद्गुणनिधयः श्रीमन्तो "वरद-
वेष्णवाचार्या" इति विश्वविख्यातकीर्तयः श्रीसुदर्शनाचार्यापरनामधेयाः तेषां
ुत्ररत्नतया समवातरन् ।

ते च बाल्यात्प्रभृति सुस्निग्धाः भगवद्दिव्यकैङ्कर्यानुष्ठानैकनिरताः अधीत-
ाङ्गसशिरस्कसकलशाखाश्रुतयः सर्वशास्त्रकलापारंगताः अनन्यसुलभसुतीक्ष्णशेमुषी-

वैभवेन श्रीभगवद्रामानुजाचार्याणां तन्मातुलचरणानां निरुपाधिकनिरवधिकप्री मापन्नाः प्रत्यर्थिवावदूकविततिविजयेन सन्तुष्टान्तरङ्गैस्तैः "प्रियभागिनेय" इ प्रदत्तदिव्यविरुदाः अनितरसुलभं श्रीभाष्यसिंहासनं तदीयनिखिलचिह्नैस्साकमवापुः यथोक्तमभियुक्तैः —

सत्कुर्वता संसदि शिष्यवर्गान्
अनन्यलभ्यैरखिलैः स्वचिह्नैः ।
श्रीभाष्यसिंहासनमात्मनीनं
यस्मै च दत्तं यतिशेखरेण ॥ इति,

श्रीरामानुज सद्दीक्षाफलमेतन्महात्मनः ।
प्रियस्वस्रीयताराज्यमासीत् प्राज्यं कुलेशितुः ॥ इति च ।

एतेषां विषये अनुसन्धीयमानौ 'तनियन्' श्लोकौ ;

यथा —

यस्मिन् पदं यतिवरस्य मुखात्प्रणेतुं
निष्कामदेव निदधे निगमान्तभाष्यम् ।
तस्यैव तं भगवतः प्रियभागिनेयं
वन्दे गुरुं वरदविष्णुपदाभिधेयम् ॥

ज्ञानोत्तमोद्धतिनिराकरणप्रतुष्यत्-
रामानुजार्यकरुणापरिणामपात्रम् ।
वत्सान्ववायतिलकं वसतिं गुणानां
वन्दामहे वरदविष्णुगुरुं वरेण्यम् ॥ इति ॥

तेषां च अनन्यसामान्यवैदुष्यभूषिताः विजितप्रतिवादिदत्तबिरुदस्तोमा निस्समाभ्यधिकग्रन्थसहस्रप्रणेतारः सद्गुणनिधयः श्रीदेवराजगुरवः पुत्ररत्नमभवन् तद्विषयोऽयं श्लोकः —

नमो वेदान्तवाक्यार्थविवादेऽभेदवादिभिः (नाम्) ।
वितीर्णजयपत्राय देवराजविपश्चिते ॥ इति ।

तेषां च श्रीमद्देवराजगुरूणां अनपत्यतया दूयमानानां श्रीदेवराजभगवन्निरव-
ह्यानुग्रहप्रभावेन 'सुभद्र' नामधेयो नित्यसूरिः, अज्ञानान्धतमसावृतसंसारि-
चेतनसमुद्धरणाय, श्रीमद्वेदान्तयुगलीचिकुरबन्धसमीकरणाय च अवततार
सोमरकुमाररत्नतया सर्वमङ्गलमाङ्गलिके पुण्ये पुष्पितकानने परमपावने चैत्रे मासे
चित्रानक्षत्रे ।

अत्र श्लोका एवमनुसन्धीयन्ते ;

था :—

चैत्रं गच्छति पद्मिनीसहचरे चन्द्रे च चित्रां गते
लग्ने चोक्षणि देवराजतनयः श्रीदेवराजाज्ञया ।
काञ्चीनामनि मुक्तिधामनि पुरे सूरिः सहस्राह्वयः
श्रीवत्सान्वयदेशिकस्समजनि त्रैलोक्यरक्षाकृते ॥

चैत्रे चित्रोद्भवं काञ्च्यां देवराजगुरोः सुतम् ।
सुभद्रांशं गुरूत्तंसं वात्स्यं वरदमाश्रये ॥ इति ।

देयाच्छ्रेयांसि भूयांस्यतुलगुणलसद्वत्सवंशोत्सवार्थम्
चित्रायां चैत्रमासे भुवि रचितसुभद्रांशभद्रावतारः ।
श्रीमद्रामानुजार्यस्फुरदुरुमधुरोदारगीःपूरकेलि-
स्फायद्रोमोद्गमश्रीर्वरदगुरुवरः स्वान्वयस्थाय मह्यम् ॥ इति ॥

श्रीमतो भगवतो दिव्यचरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्ति—परज्ञान-
:मभक्तिभरिता एते च महानुभावाः — श्रीमद्देवराजदिव्यकैङ्कर्यनिर्वहणैकनिरताः,
ामद्विष्णुचित्तदिव्यसूरय इव भगवत्यतिमात्रप्रेमविह्वलाः, कदाचित् भगवत्कैङ्कर्यपरेण
नचित्, अनासक्त्या, सुक्वथिते अत्युष्णेऽप्रशस्ते पयसि भगवते प्रदीयमाने,

तमत्यन्तमपचारमसहमानाः, भृशं दुःखिताः, सरभसं तद्भूलादाकृष्य, तदन्य निक्षिप्य, अन्यत् सुखोष्णं सुप्रशस्तं सुमधुरं सुभगपरिमलपरिमिलितं स्वादिष्ठं गोक्षी समानीय भक्तिविनमितोत्तमाङ्गाः सादरं भगवते समर्पयामासुः ।

तदा तु सपदि एतद्दर्शनसुसन्तुष्टेन भगवता तदीयनिस्सीमप्रेममहिमानुगु अनन्यसाधारणं "अम्माळ्" (अम्बा) इति बिरुदनाम समनुजगृहे । तदारभ्यै च एतेषां "नडादूर् अम्माळ्" इति व्यपदेशः समजनि ।

अत्र इमौ श्लोकौ प्राचीनैरनुसंधीयेते —

क्षीरं येन समर्पितं मधुरिमस्फारं निपीयाऽऽदरात्
धीरं 'मज्जननी' त्यगर्जि करुणाऽऽसारं मुहुर्वर्षता ।
श्रीरन्त्रा करिशैलशृङ्गमयतोदारं महाम्भोमुचा
नीरन्ध्रं सुखमातनोतु वचसां दूरं स वात्स्यो गुरुः ॥

पुत्रिणे चिदचित्पित्रा पौत्रिणे परमेष्ठिना ।
स्नुषावते जगन्मात्रा वात्स्याय गुरवे नमः ॥ इति ।

आचार्यवर्याश्चैते—स्वावतारमहिम्ना, भक्तिप्रकर्षेण च आजानपावनदिव्य शेमुषीयशःप्रभावपरिकलिताः स्वपितृचरणानां सविध एव नातिचिरेण काले सर्वाण्यपि तन्त्राण्यध्यगीषुः ; तदनु स्वपितृदेवानां नियमनेन श्रीमद्यतिराजाब्धिचन्द्रमः श्रीमत्कुरुकाधीश्वरगुरुवर्याणां सच्छिष्यरत्नानां चुलुकीकृतसाङ्गोपाङ्गसशिरस्कप्रकर श्रुतिविततिसिन्धूनां निरन्तरमुपन्यस्यमान–प्रौढगम्भीरश्रीमद्यतिशेखरभारती–दिव्य गभीरभावानां श्रीविष्णुचित्तार्यतल्लजानां पादसरोजसंसेवनेन समधिगतश्रीभाष्यादि निखिलवेदान्तदिव्यनिबन्धाः समभवन् । तदुक्तम् —

आम्नायान्यध्यगीष्ट स्वपितृचरणतस्साकमङ्गोत्तमाङ्गैः
स्वातन्त्र्यं प्राप तन्त्रे तदनु कणभुजः पश्यदङ्घ्रेश्च शास्त्रे ।
सांख्ये योगे पुराणेष्वपि विपुलधियामग्रगण्यप्रसिद्धिम्
स श्रीमद्वत्सवंशो जयति 'वरद' इत्याख्यया देशिकेन्द्रः ॥ इति

श्रीविष्णुचित्तपदपङ्कजसङ्गमाय (संश्रयाय)
चेतो मम स्पृहयते किमतः परेण ।
नो चेन्ममापि यतिशेखरभारतीनां
भावः कथं भवितुमर्हति वाग्विधेयः ॥

इति एतदारचितग्रन्थमङ्गलश्लोकत एव निष्पद्यते, श्रीविष्णुचित्तार्याणां सविध एव श्रीभाष्यादिवेदान्तसम्प्रदायग्रन्था एभिरधीताः—इति ।

विष्णुचित्तदयापात्रं वत्सवंशशिरोमणिम् ।
देवराजगुरोस्सूनुं वन्दे वरददेशिकम् ॥

इति कैश्चिदाचार्यैः एतेषां 'तनियन्' श्लोकः अनुसन्धीयते ।

श्रीविष्णुचित्तार्याणां च द्राविडभाषायां "एङ्गळाळ्वान्" इति व्यवहारः । ते च श्रीमद्यतिराजाब्धिचन्द्रमसां श्रीमत्कुरुकेश्वरदेशिकानां प्रियशिष्या इति,

विख्यातो यतिसार्वभौमजलधेश्चन्द्रोपमत्वेन यः
श्रीभाष्ये च(ण)यदन्वयास्सुविदिताः श्रीविष्णुचित्तादयः ।
व्याख्यां भाष्यकृदाज्ञयोपनिषदां यो द्रामिडीनां व्यधात्
पूर्वं(र्णं) तं कुरुकेश्वरं गुरुवरं कारुण्यपूर्णं भजे ॥

इति श्लोकतो विज्ञायते ।

## एतेषां शिष्यप्रशिष्याः

मृदुमधुरगम्भीरोपन्यासप्रकारैः श्रीमद्यतिसार्वभामानुगृहीत—दिव्यश्रीभाष्य-दुग्धामृताभिवर्षणेन सर्वमपि विश्वमाप्याययतां एतेषां महानुभावानां महागुरूणां—श्रीमद्धारीतकुलतिलकवाग्विजयसूनवः श्रीवत्सांकमिश्रवंश्याः श्रीरङ्गराजदिव्याज्ञालब्धवेद-व्यासापरनामधेयाः "श्रीमच्छ्रुतप्रकाशिकाचार्याः" इति सर्वत्र सर्वतोमुखं विसृत्वर-विकस्वरदिव्ययशोवैभवाः श्रीमत्सुदर्शनभट्टारकाः, तथा "श्रीवादिहंसाम्बुवाहः"

)

इति प्रतिकथककविततिजेगीयमानविमलयशोभूषिताः न्यायकुलिशादिप्रौढप्रबन्धप्रणेतार श्रीमद्यतिराजदिव्यमाहानसिकानां श्रीमद्वेदान्तोदयनबिरुदभाजां श्रीमद्यतिशेखर गुरुतल्लजेभ्यः पवित्रतमदिव्याम्बुपरिपूर्णघटादिसमर्पणेन 'घटाम्बु' इति तन्नि रूपकसुप्रसिद्धदिव्याभिजननामधेयानां "किडाम्बि आच्चान्" इति द्राविडभाषाय व्यवह्रियमाणानां श्रीमत्प्रणतार्तिहराचार्याणां नप्तारः, श्रीमदुभयवेदान्तदुग्धाम्बुधि मध्योद्धृतसत्तत्त्ववचस्सुधानां श्रीरङ्गराजापरनामधेयानां श्रीमदात्रेयपद्मनाभार्याणां पुत्राः सर्वतन्त्रस्वतन्त्रस्य कविकथककण्ठीरवस्य श्रीमद्वेदान्ताचार्यस्य मातुलपादाः, तथ तदाचार्यचरणाश्च श्रीमदात्रेयरामानुजाचार्याश्च प्रधानशिष्याः ।

वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् ।
भाष्यामृतप्रदानाद्यः सञ्जीवयति मामपि ॥

इति श्रीमच्छ्रुतप्रकाशिकारम्भे श्रीमत्सुदर्शनसूरिभिरनुसंहितो मङ्गलश्लोक एव एतेषामाचार्यवर्याणां 'तनियन्' श्लोकतया प्रसिद्धिमवाप ।

अथ कदाचिदेभिराचार्यैः स्वान्तरङ्गशिष्येभ्यः श्रीभाष्याध्यापने क्रियमाणे पञ्चवर्षदेशीयः पुञ्जीभूततेजोराशिः स्फुरन्मूर्तिः श्रीमान् वेंकटनाथार्यः स्वमातुलपादै आत्रेयरामानुजाचार्यैः साकं तदाचार्यचरणचरणनलिनसंसेवनकुतूहलेन तत्राजगाम तस्य अतिविलक्षणाकृतेर्बालकस्य दर्शनेन पर्युत्सिकितान्तरङ्गा आचार्यपादाः समयाचारकुशलप्रश्नाद्यनन्तरं "कोऽयं बालकः?" इति आत्रेयरामानुजाचार्यान् स्वपार्श्वस्थितान् पर्यपृच्छन् । तैश्च सविनयमुपपादिते सर्वोदन्ते, विज्ञाततदभि- जनादिवृत्तान्ताः, स्वपरित्यक्तपाठस्थलसूचनेन च संपरिज्ञाततदीयविस्फूर्जत्सुनिशित मेधावैभवाः, संप्रहृष्टस्वान्तरङ्गाः —

" प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः ।
भूयास्त्रैलोक्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥ "

इति अवितथं मङ्गलाशासनमकार्षुः; नियोजयामासुश्च स्वप्रियशिष्यान् तानात्रेय- रामानुजाचार्यानेव तदाचार्यकत्वे ।

विंशत्यब्दे विश्रुतनानाविधविद्यः त्रिंशद्वारं श्रावितशारीरकभाष्यः श्रीमद्धय-वदनभगवद्दिव्यलालाजलनिषेवणसम्प्राप्त—निरर्गलनिरवधिकप्रौढगम्भीरवाग्झारीसंप्लावित-दशदिगन्तः अक्षोभ्यानवद्यहृद्यशताधिकदिव्यनिबन्धनिर्माता श्रीमद्वेदान्तदेशिकः —

" श्रीमद्भ्यां स्यादसावित्यनुपधि वरदाचार्यरामानुजाभ्याम्
सम्यग् दृष्टेन सर्वं सह निशितधिया वेङ्कटेशेन क्लृप्तः । "

इति अधिकरणसारावलीश्लोकेन ; तथा —

" श्रुत्वा रामानुजार्यात् सदसदपि ततस्तत्त्वमुक्ताकलापं
व्यातानीद्वेङ्कटेशो वरदगुरुकृपालम्भितोद्दामभूमा । "

इति तत्त्वमुक्ताकलापश्लोकेन, मीमांसापादुकागतमङ्गलश्लोकादिना च विषय-ममुं स्वहस्तयति ।

## एतेषां देशकालचरित्रादिकम्

एतेषामाचार्यवर्याणां वैभवादिकं सर्वमपि चारित्रं तत्कुलीनैः **श्रीहेममालि-देशिकार्यवर्यैः चर्यादीप**नामके ग्रन्थे, **श्रीमीमांसावल्लभवरदाचार्यैश्च वरद-देशिकवैभवप्रकाशिकायां, वरददेशिकाभ्युदये** च अभ्यवर्णि सुविशदनिपुणम् । विस्तरस्तत्र द्रष्टव्यः तद्विविदुषुभिः ।

यत एते, (१०१७—११३७ A. D. कालिकस्य) श्रीमद्रामानुजमुनि-पुङ्गवस्य प्रियभागिनेयानां श्रीमद्वरदविष्णवाचार्याणां पौत्राः, श्रीमत्सुदर्शनभट्ट-श्रीमदात्रेयरामानुजार्यादीनां आचार्याश्च , ततः, क्रीस्तुशकत्रयोदशशताब्दारम्भे (13 th Century A. D.) आसन्निति निर्णयः अतीव सुकरः । सकल-पुरीनिकषायमाणा आजानपावनप्रशस्तिः काञ्चीपुरी च एतेषां जन्मावासभूमिरिति करतलकलित एवायं विषयः । अतोऽत्र विस्तरणं नापेक्ष्यते ।

## एतैरारचिताः प्रबन्धाः

श्रीमन्नाथमुनिदिव्याद्रिमारभ्य प्रवृत्तायाः श्रीमन्नारायणानुगृहीतायाः श्रीमदु-भयवेदान्तसम्प्रदायदिव्यस्रोतस्विन्याः संतरणे तरणिभूताः, परमकारुणिकाः, एते

सदाचार्यमहोदयाः—तमिमं श्रीमद्विशिष्टाद्वैतसिद्धान्तं, न केवलं पठनपाठनक्रमेण, नैवाऽऽचरणप्रचारणसरण्या, नापि गम्भीरोपन्यासामृताभिवर्षणप्रणाल्या, न चापि युक्तिप्रयुक्तिप्रयोगकोटिकमप्रवृत्तवादगोष्ठीप्रवर्तनप्रक्रियया, अपि तु, नैकविधानां सहृदयमर्मस्पर्शिनां मृदुमधुरगम्भीरसन्दर्भाणां श्रीमदुभयवेदान्तसम्प्रदायग्रन्थानां अवतरणेन सर्वत्र सर्वतोमुखं व्यवस्थापयामासुः ।

एभिरारचितादिव्यप्रबन्धाः —

(१) तत्त्वसारः (२) प्रपन्नपारिजातः (३) प्रमेयमाला (४) आह्निकचूडामणिः (५) आराधनक्रमः (६) प्रमेयसारः (७) मङ्गलाशासनम् (८) ज्ञानसारः (९) जयन्तीदर्पणम् (१०) हेतिराजसप्तकम् (११) रहस्यसंग्रहः (१२) चतुर्लक्षणसंग्रहः (१३) द्रमिडोपनिषत्संग्रहः (१४) श्रीभाष्यसंग्रहः (१५) परतत्त्वनिर्णयः (१६) परत्वादिपञ्चकम् (१७) प्रातःस्मरणीय–अर्चिरादि-श्लोकद्वयम् — इत्यादिका अनेके विराजन्ते ।

एषु ग्रन्थेषु सर्वेषु आद्यन्तनिबद्धैः श्लोकैः एतेषां चारित्रकांशा अनेके स्फुटं विज्ञायन्ते ।

किं च एतत्कुलीनैः "घटिकाशतं अम्माळ्" इति प्रसिद्धैः, एतत्पुत्रसन्ततौ पञ्चमैर्वरदाचार्यैः, एतद्विषये सुप्रभातस्तोत्रं विरचितं किञ्चिद्विलसति ; तेन च बहुविधा एतच्चरित्रांशा विज्ञायन्ते । यथा —

त्वत्सन्निधेर्धुरि यतीश्वरभाष्यटीका-
मादायतिष्ठति सुदर्शनभट्टसूरिः ।
रामानुजोऽपि च तदर्थविवेचनाय
भक्त्यैव ते वरददेशिक! सुप्रभातम् ॥

क्षीरप्रदानसमये जननी कथं मे
प्रीतीयुतो वरदराड्गुदगूहयद्यम् ।
यस्य क्षितौ भवति विश्रुतमाह्वयं तत्
'अम्मे'ति ते वरददेशिक! सुप्रभातम् ॥ इत्यादिभिः श्लोकैः ।

एतत्प्रबन्धरचनामधिकृत्याप्येवमभ्यवर्णि —

श्रीमत्प्रपन्नजनवाञ्छितपारिजात-
नामप्रबन्धमनघं प्रबबन्ध वाचा।
यो वै परत्वमुखपञ्चकमर्चिरादि-
मार्गं च ते वरददेशिक! सुप्रभातम् ॥ इति।

अदसीयेषु प्रबन्धेषु प्रपन्नपारिजातोऽसौ सर्वप्राणिसमुत्तरणचणप्रपत्तिमार्ग-विशदीकरणचुञ्चुः सर्वथा पारिजातायत इति, एतद्ग्रन्थमुद्रणे प्रथमं वयं प्रवृत्ताः। सति समये क्रमश एतेषां सर्वे ग्रन्था मुद्रापयिष्यन्ते।

प्रपत्तिमार्गविशदीकरणप्रबन्धाः प्रायशो द्राविडभाषायामेव परश्शता उपलभ्यन्ते। अयं तु, सर्वदेशविद्वदनुभावयोग्यसंस्कृतभाषायां, तत्रापि सुललित पदबन्धपरिमिलितश्लोकप्रसूनसंग्रथितकाव्यरूपतया च समुल्लसतीति, पुनरयं हेम्नः परमामोदः ॥

अन्यूनानतिरिक्तविषयप्रतिपादके सारतमेऽस्मिन् प्रबन्धे, सारतमा दश अंशाः, दशसु पद्धतिषु सुललितसुभगं सकलश्रुतिस्मृतीतिहासपुराणपाञ्चरात्रादि-प्रमाणवचनोपन्यासपुरस्सरं क्रमशो निरूप्यन्ते। ते च —

(१) प्रपत्तिबोधकप्रमाणानि (२) प्रपत्तिस्वरूपम् (३) प्रपत्तेरधिकारी (४) प्रपन्नानां गुरौ वृत्तिः (५) प्रपन्नानां भगवत्परिचर्याक्रमः (६) भगवत्परिजनोपासनाक्रमः (७) भागवतपरिचर्याक्रमः (८) विहितव्यवस्थापनक्रमः (९) वर्जनीयविवेकः (१०) फलोदयक्रमः — इति।

वेद – वेदान्त – आगम – सूत्र – स्मृति – इतिहास –पुराणादिषु शास्त्रेषु, ये वा विषयाः, अत्यन्तं सारतमाः, हिततमाश्च अतिनिगूढं समुपवर्णिताः, ते सर्वेऽप्यत्र आदर्शप्राये प्रबन्धे सर्वप्राणिहृदयङ्गमं सङ्गृह्य विनिवेदिताः। अतोऽयं निरुपमः प्रबन्धपारिजातः सर्वेषामत्यन्तमुपादेय इत्यत्र नास्ति संशयलेशोऽपि।

## कृतज्ञताविष्करणम्

एवमतिविलक्षणस्य प्रबन्धास्यास्य सम्पादने अनुमतिप्रदानादिना अतिमहा मुपकारं सम्पादितवद्भ्यः महोदारेभ्यः श्रीतिरुमलतिरुपतिदेवस्थानधर्मकर्तृसंघस महोदयेभ्यः, तथा, तत्सकलकार्यधुरंधराय महितकल्याणगुणाय श्री चेलिकानि अन्नारावुमहाशयाय च परश्शतान् धन्यवादानर्पयामि ।

एवं विमलकल्याणगुणगणपूर्णेभ्यः मन्दस्मितसमुदञ्चितसारसूक्तिभ्यः सदै रूपरूपेभ्यः सदापि वात्सल्यामृतमभिवर्षद्भ्यः एतद्ग्रन्थमुद्रणे अत्यन्तमुपकृतवद्भ्यः श्रीमद्भ्यः अस्मदध्यक्षमहाभागेभ्यः श्रीमत्परवस्तु-वेङ्कटरामानुजस्वामिमहोदयेभ्यः सदाऽहमधमर्णः, कृतज्ञः, क्रियमाणज्ञः, करिष्यमाणज्ञश्च भवन्, नतिततीरर्पयामि

पाठभेदादिनिवेशने, तथा आकरनिर्देश – अनुबन्धादिसम्पादने स कर्मणि सहायभूते, विदुषि श्री–ईयुण्णि–गोपालकृष्णमाचार्ये शिरोमणौ मङ्गलशास पुरस्सरी कृतज्ञता प्रकाशनीया भवति ।

## विज्ञापनम्

भ्रान्तेः पुरुषधर्मत्वात् अत्र ज्ञाताज्ञाता अनेके दोषा भवेयुः, तान् सर्वा सहृदयशिरोमणयः हंसक्षीरन्यायेन परिपाल्य, गुणग्रहणपारीणाः, समीक्ष्य वात्सल्येन, पुनः संस्करणे कृपया मां प्रतिबोधयेयुरिति विज्ञाप्यते ।

प्रसीदतु भगवान् पद्मासहायः पद्मया सह; प्रसीदन्तु परमकारुणि आचार्यवर्याः; प्रसीदन्तु च वत्सलाः सहृदयशिरोमणयः ।

जय-मिथुन-शुक्लदशमी
श्रीपद्मपुरी
१०–६–१९५४.

इति
विज्ञापयिता
ति. कु. वें. न. सुदर्शनदास

ॐ

श्रीमते श्रीनिवासाय नमः





ऊर्ध्वौ हस्तौ यदीयौ प्रतिभटदलने बिभ्रतः शङ्खचक्रे
सेव्यावङ्घ्री स्वकीयावभिदधदधरो दक्षिणो यस्य पाणिः ।
तावन्मात्रं भवाब्धिं गमयति भजतामूरुगो वामपाणिः
श्रीवत्साङ्कश्च लक्ष्मीर्यदुरसि लसतो वेङ्कटेशस्स जीयात् ॥

चक्रं शास्ति सुकर्मयोगकलनं, ज्ञानं च शङ्खस्तथा
पाणिश्चोरुकटिप्रसञ्जिततलः श्रीभक्तियोगं तथा ।
श्रीमत्पादसरोजदर्शककरो योगं प्रपत्तिं परं
यस्यान्वर्थचतुर्भुजस्स भगवान् जेजेतु लक्ष्मीसखः ॥

श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिर्नः तरङ्गयतु मङ्गलम् ॥

— ० —

श्रीः

श्रीमते रामानुजाय नमः

# विषयानुक्रमणिका







---

* गमनिका — ग्रन्थेऽस्मिन् सप्तम्याः पद्धतेर्नाम ‘ भगवदुपासनपद्धतिः ’ इति प्रमादा पतितम् ।

श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते वरदार्यमहागुरवे नमः

* वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् ।

भाष्यामृतप्रदानाद्यः सञ्जीवयति मामपि ॥



श्रीवत्सकुलतिलकैः श्रीमद्वरदाचार्यमहागुरुभिः अनुगृहीतः

# प्रपन्नपारिजातः



## प्रमाणपद्धतिः

### (अवतरणिका)

† आचार्यार्यमपादेभ्यो [1]नमस्यासन्ततिं दधे ।

[2]यदाऽऽसङ्गवशात् पुंसां मनःपद्मं प्रबुध्यते ॥ १ ॥

---

* श्लोकोऽयं — श्रीमद्वरदाचार्याणां वैभवप्रकाशनेन तद्विषये कृतज्ञता-निवेदनपुरस्सरं वन्दनसमर्पणैकतानः, 'तनियन्' इति द्राविडभाषायां व्यवह्रियमाणः, तदन्तरङ्गशिष्यावतंसैः श्रीमद्भिः श्रुतप्रकाशिकाचार्यैः श्रीसुदर्शनभट्टारकैः अनुगृहीतः, तदुपकारस्मृत्यै ग्रन्थादावत्र पूर्वाचार्यैरुपनिबद्धः ॥

† श्रीमन्तः, तत्रभवन्तः, श्रीभगवद्भागवताचार्याणां निरवधिक-निरुपाधिकदिव्यकृपाकटाक्षसन्धुक्षणेन समुपलब्धदिव्यविशदतमविलक्षण-विज्ञानसर्वस्वाः, विशुद्धविमलदिव्यचारित्राः, नित्यानवद्यहृद्यविलक्षणविशिष्टा-नुष्ठाननिष्ठागरिष्ठाः, प्रपन्नजनजीवराजीवजीवातवः, परमकारुणिकाः कृपा-

---

1. नमस्यां विदधाम्यहम् — पा० ग. 2. यत्संसर्गं — पा० ग.

---

क — आन्ध्रलिपिताळपत्रग्रन्थः ॥

ख — आन्ध्रलिपिलिखितपुस्तकम् ॥

ग — ग्रन्थलिपिताळपत्रग्रन्थः ॥

* अभङ्गुरकलादानस्थूललक्ष्यत्वमीयुषे ।
तुङ्गाय [1]महते तस्मै तुरङ्गाय मुखे नमः ॥ २ ॥

† लक्ष्मीचक्षुरनुध्यानात् तत्सारूप्यमुपेयुषे ।
नमोऽस्तु मीनवपुषे वेदवेदिविपन्मुषे ॥ ३ ॥

‡ रजो रजःप्रशमनं प्रपद्ये पदयोः सताम् ।
प्रपन्नपारिजाताख्यप्रबन्धाय यतामहे ॥ ४ ॥

° (१) प्रपत्तेर्मानसौभाग्यं (२) स्वरूप (३) मधिकार्यपि ।
(४) प्रपन्नानां गुरौ वृत्तिः (५) श्रीशे (६) सूरिषु (७) सत्सु च ॥ ५ ॥

---

मालप्रसन्नाचार्य — श्रीभगवद्रामानुजमुनिपुङ्गवानुगृहीत — श्रीमद्विशिष्टाद्वैत सिद्धान्तविजयध्वज — श्रीभाष्यदिव्यप्रबन्धप्रवचनसाम्राज्यसिंहासनमधितस्थिवांसः 'नडादूर् अम्माळ्' इति द्राविडभाषायां प्रसिद्धतमपवित्रदिव्यनामधेयाः श्रीमदुभयवेदान्तसम्प्रदायघण्टापथप्रतिष्ठापनाचार्याः, श्रीमद्वरदाचार्यमहोदयाः भगवत्प्राप्तिस्वरूपमोक्षसाम्राज्यानुभूतिप्राप्तौ भगवत्प्रपत्तिमन्तरा नान्यमुपाय माकलयन्तः, कलयन्तश्च तामेव परमोपायं, तत्स्वरूपलक्षणप्रमाणादिनिरूपणे प्रवृत्ताः, सुललितं सुभगमधुरं संस्कृतपद्यप्रसूनपरिमिलितं, कञ्चन दिव्यं प्रबन्धं प्रणिणीषवः, स्वप्रणीतप्रबन्धस्य निर्विघ्नपरिसमाप्त्यर्थं, प्रचयगमनाय च समुचित-इष्टदेवतानमस्कारात्मकं मङ्गलं प्रणयिष्यन्तः, प्रथमतः, तत्पुरुषकारभूत-आचार्य चरणचरणनलिनवन्दनरूपं मङ्गलं तद्विहितमहोपकारसंस्मरणपुरस्सरं शिष्य शिक्षायै ग्रन्थतो निबध्नन्ति ।

* ततः समुचित-इष्टदेवतास्वरूप-श्रीमद्धयवदनपरब्रह्मनमस्काररूपमङ्गल माबध्नन्ति ।

† वेदोद्धरणादिना महदुपकृतवतः परमपुरुषप्रथमावतारस्य लक्ष्मीसविभ्रमालोकसुभ्रूविभ्रमचक्षुषो मीनवपुषो भगवतो वन्दनमातन्वन्ति ।

‡ स्वप्रबन्धप्रमेयस्य सुतरामनुगुणं सतां महतां पादरजः प्रपद्य, स्वप्रबन्ध प्रणयनं प्रतिजानन्ति ।

° स्वप्रबन्धप्रमेयं पाठकजनमनःप्रबोधनाय विभज्य प्रदर्शयन्ति ।

---

1. महसे – पा० ग.

(८) विहितेषु व्यवस्थानं (९) वर्जनीयं (१०) फलं तथा ।
एते दशार्थाः [1]कथ्यन्ते त्वय्यन्ताद्यर्थसंग्रहात् ॥ ६ ॥

* [2][श्रुतार्थमननस्थैर्ये मम नेतरथा श्रमः ।
सोढव्यमत्र स्खलितं सद्भिर्विषयगौरवात्] ॥ ७ ॥

**ग्रन्थारम्भः**

† प्रपत्तिः — तैत्तिरीयाणां वेदे तावत् विधीयते ।
‡ [3]न्यासाभ्यासप्रयोगो 'हि " वसुरण्ये " ति मन्त्रतः ॥ ८ ॥

तत्रोपास्यं यथा ब्रह्म सर्वकारणमुच्यते ।
प्रपत्तव्यं तदेवेति "[5]विभु विश्वसृ" गित्यपि ॥ ९ ॥

सूर्यादीनां यथापूर्वं तेजः कल्पयिताऽसि[6] च ।
वसुवत् रमणीयोऽसीत्येवं ब्रह्म गुणैः स्तुतम् ॥ १० ॥

जीवात्मानं हविः कृत्वा तच्छरीरं महीयसि ।
" ब्रह्माग्नौ [7]जुहुयादो " मित्यनेनाम्नायरूपिणम् ॥ ११ ॥

---

* स्वाहङ्कारनिरसन – नैच्यानुसन्धानपूर्वकं सतां सहृदयानां क्षमां प्रार्थयन्ते ।

† प्रपत्तिसाधकानि प्रमाणानि विविच्य प्रदर्शयन्तः, प्रथमतः, सर्वप्रमाणमूलभूतत्वात्, वेदवाक्यानि नित्यनिर्दुष्टस्वतःप्रमाणानि प्रदर्शयन्ति ।

‡ वसुरण्यो विभूरसि प्राणे त्वमसि सन्धाता ब्रह्मन् त्वमसि विश्वसृक्तेजोदास्त्वमसि । अग्नेर्वर्चोदास्त्वमसि । सूर्यस्य द्युम्नोदास्त्वमसि । चन्द्रमस उपयाम गृहीतोऽसि । " ब्रह्मणे त्वा महस ओ " मित्यात्मानं युञ्जीत । एतद्वै महोपनिषदं देवानां गुह्यं य एवं वेद । ब्रह्मणो महिमानमाप्नोति । तस्माद्ब्रह्मणो महिमानमित्युपनिषत् । इति । (तैत्तिरीयोपनिषत् ४ – ७७)

---

1. कीर्त्यन्ते–पा० ग. 2. कुण्डलितः श्लोकः " ग " पुस्तके नास्ति । 3. न्यासाख्यान–पा० क. 4. असौ–पा० ग. 5. विभुर्विश्वदङ्–पा० क. 6. अपि च–पा० क. 7. जुहुयामीत्यमित्यनेन द्वयरूपिणा–पा० ग.

इति प्रपत्तेराम्नातः प्रयोगः प्रणवात्मना ।
* तस्यैवं विदुषो यज्ञशरीरे [1]तत्र कल्पितः ॥ १२ ॥

† प्रपत्तिं तपसामेषां न्यासाख्यामाहुरुत्तमाः[2] ।
‡ आम्नातं कठवल्लीषु प्रपत्तेर्वाचकं द्वयम् ॥ १३ ॥

प्रमाणं सुभगं प्राह श्वेताश्वतरसंहिता ।
प्राह चोपनिषन्न्यासे यथाऽनुष्ठानदर्शिनी ॥ १४ ॥

---

* तस्यैवं विदुषो यज्ञस्यात्मा यजमानः, श्रद्धा पत्नी, शरीरमिध्मम्, उरो वेदिः, लोमानि बर्हिः, वेदश्शिखा, हृदयं यूपः, काम आज्यम्, मन्युः पशुः, तपोऽग्निः, शमयिता दक्षिणा, वाग्घोता, प्राण उद्गाता, चक्षुरध्वर्युः, मनो ब्रह्मा, श्रोत्रमग्नी, यावद्ध्रियते सा दीक्षा, यदश्नाति यत्पिबति तदस्य सोमपानम्, यद्रमते तदुपसदो, यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो, यन्मुखं तदाहवनीयो, यदस्य विज्ञानं तज्जुहोति, यत्सायं प्रातरत्ति तत्समिधो, यत्सायं प्रातर्मध्यंदिनं च तानि सवनानि, ये अहोरात्रे ते दर्शपूर्णमासौ, येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि, य ऋतवस्ते पशुबन्धाः, ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः, सर्ववेदसं वा एतत्सत्रम्, यन्मरणं तदवभृथः, एतद्वै जरामर्यमग्निहोत्रम्, य एवं विद्वान् उदगयने प्रमीयते देवानामेव महिमानं गत्वा आदित्यस्य सायुज्यं गच्छति, अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति, तस्माद्ब्राह्मणो महिमानमाप्नोति, तस्माद्ब्रह्मणो महिमानमित्युपनिषत् — इति। (तैत्तिरीयोपनिषत् ४–७८)

† "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" (तै. उ. ४—७७) इति वाक्यं कटाक्षयन्तः प्रतिपादयन्ति।

‡ तदेषाऽभ्युक्ता। तदेव भूतं तदुपासितव्यं सत्यं तद्द्वयम्। "श्रीमन्नारायणचरणौ शरणं प्रपद्ये" (पूर्ववाक्यम्)। इदं पूर्णमदःपूर्णं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते। सर्वं पूर्णगुं स होम। "श्रीमते नारायणाय नमः" (उत्तरवाक्यम्)। वेदे या ब्रह्मा विदुः। वेदेनानेन वेदितव्यम्। य एवं वेद। इत्युपनिषत् — इति। (कठवल्लीखण्डम्)

---

1. यत्र— पा० क. 2. उत्तमाम्— पा० क, ग.

* "ब्रह्माणं विदधात्यग्रे" "यस्तस्मै दिशति" [1]श्रुतिः ।
आत्मज्ञान[2]प्रसादार्थं मुमुक्षुः शरणं व्रजेत् ॥ १५ ॥

† "अपि वध्यं प्रपन्नं न प्रयच्छ" न्त्येवमादिकाः ।
बहवः श्रुतयो मानं, ‡श्रीशास्त्रे भगवानपि ॥ १६ ॥

"श्रीमन्नारायणाये[3]" ति ब्रह्मणे [4]द्वयमुक्तवान् ।
⁂ लक्ष्मीतन्त्रे कमलया [5]शक्रायैव[6] प्रपञ्चितम् ॥ १७ ॥

○ तथा सनत्कुमारस्य संहिता वक्ति सादरम् ।
"प्रपत्तिं सर्वफलदां [7]सर्वोपायानपेक्षणीम् ॥ १८ ॥

प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते ।
सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा ॥ १९ ॥

सकृदुच्चारिता [8] ह्येव तस्य संसारनाशिनी [9] ।
राक्षसानामविस्रम्भात् आञ्जनेयस्य बन्धने ॥ २० ॥

---

* यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं, मुमुक्षुर्वै शरणमहं प्रपद्ये ॥
(श्वेताश्वतरोपनिषत् ६ – १८)

† देवा वै यज्ञाद्रुद्रमन्तरायन्, स आदित्यानन्वक्रामत, — ते द्विदेवत्यान् प्रापद्यन्त, तान्न प्रतिप्रायच्छन्, तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति । तस्माद्द्विदेवतेभ्य आदित्यो निर्गृह्यते — इति (कृष्णयजुर्वेदः ६ – ५ – ६); देवा वै त्वष्टारमजिघांसन् । स पत्नीः प्रापद्यत । तं न प्रतिप्रायच्छन् । तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति इति च । (कृष्णयजुर्वेदः ६ – ५ – ९)

‡ श्रीभगवच्छास्त्रं प्रदर्शयन्ति ।

⁂ लक्ष्मीतन्त्रं निर्दिशन्ति ।

○ सनत्कुमारसंहितां प्रदर्शयन्ति ।

---

1. प्रभुः — पा० क. 2. प्रसादं तम् — पा० क. 3. नारायणेत्यादि—पा० क, ग. 4. स्वयम्—पा० क. 5. शक्रायेयं प्रपञ्चिता— पा० क. 6. एवम्—पा० ग. 7. सर्वोपायैरपेक्षिताम्—पा० क. 8. येन—पा० क, ग. 9. संसारतारिणी—पा० क.

यथा विगलिता सद्यो [1]ह्यमोघाऽप्यस्त्रबन्धना ।
तथा पुंसामविश्वासात्[2] प्रपत्तिः प्रच्युता भवेत् ॥ २१ ॥

तस्माद्विस्रम्भयुक्तानां मुक्तिं दास्यति साऽचिरात् ।
साधनान्तरयुक्तानां[3] प्रपत्तिः स्वयमेव वा ॥ २२ ॥

साधयेत् मुक्तिकामानां विमुक्तिं प्रणवो यथा ।"
* [4]यथाऽऽह भगवान् व्यक्तं विष्वक्सेनाय शृण्वते ॥ २३ ॥

"इतरोपायदौष्कर्यादधिकारादिहानतः[5] ।
उपायमिह वक्ष्यामि [6]प्रपत्तिं सार्वलौकिकम् ॥ २४ ॥

कालदोषान्मनुष्याणां मनश्चाञ्चल्ययोगतः ।
विषयेन्द्रियसंयोगात् निषिद्धकरणादपि ॥ २५ ॥

विहिताऽकरणान्नापि जेतुं शक्या गणाधिप !
इन्द्रियाणीन्द्रियार्थेभ्यः[7] नृणां कालस्वभावतः ॥ २६ ॥

तस्मात्तु[8] कर्मयोगेऽस्मिन् [9]नाधिकारो हि विद्यते ।
विहितेषु च[10] सर्वेषु तदभावान्महामुने ! [11] ॥ २७ ॥

ज्ञानयोगेष्वभिरतिः[12] कस्यचिद्विद्यते न च[13] ।
तदभावान्मयि प्रीतिः न च भक्तिश्च जायते[14] ॥ २८ ॥

[15][तस्मान्न कर्मयोगेऽस्मिन् नाधिकारो न चान्यथा ।]
तस्मान्मत्पादयुगलम् ऐकान्त्याच्छरणं व्रजेत् ॥ २९ ॥

---

* विष्वक्सेनसंहितां प्रदर्शयन्ति ॥

---

1. ह्यमोघं ह्यस्त्रबन्धनम्—पा० क. 2. अविश्रम्भात्—पा० क. 3 संयुक्ता—पा० ग. 4. यथा च भगवान् वक्ति—पा० क, ग. 5. हानितः—पा० क. 6. साम्प्रतम्—पा० क, ग. 7. इन्द्रियार्थाश्च—पा० क. 8. तस्मान्न—पा० क. 9. अधिकारो हि युज्यते—पा० क. 10. अपि—पा० क, ग. 11. महामते—पा० क. 12. अधिकृतिः—पा० क. 13. कस्यचिन्न च विद्यते—पा० क. 14. वर्धते—पा० क, ग. 15. अर्धश्लोकोऽयं "क", "ग" पुस्तकयोर्न दृश्यते ।

आत्मनो दुर्दशापत्तिं विमृश्य च गुणान्मम[1] ।
मदेकोपायसंवित्तिः[2] मां प्रपन्नो विमुच्यते ॥ ३० ॥

*आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ ३१ ॥

आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ।
[3]अनया च प्रपत्त्या माम् आकिञ्चन्यैकपूर्वकम् ॥ ३२ ॥

मां माधव[4] इति ज्ञात्वा मां गच्छेच्छरणं नरः ।
एवं मां[5] शरणं गच्छन् कृतकृत्यो भविष्यति" ॥ ३३ ॥

†रामायणे च भगवान् भारते च यदुक्तवान्[6] ।
"सकृदेव प्रपन्नाय तवास्मीति च याचते ॥
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" ॥ ३४ ॥

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" ॥ ३५ ॥

‡वरदानात् वसिष्ठस्य देवतापारमार्थ्यवित् ।
पराशरः प्रणिजगौ पुराणे वैष्णवे तथा[7] ॥ ३६ ॥

"तावदार्तिस्तदा[8] वाञ्छा तावन्मोहः तदाऽसुखम् ।
यावन्न याति शरणं त्वामशेषाघनाशनम् ॥ ३७ ॥

---

* प्रपत्तेः षडङ्गानि निर्दिशन्ति ।

† श्रीमद्रामायणभारतचरमश्लोकौ प्रदर्शयन्ति ।

‡ श्रीपराशरस्याप्ततमत्वं व्यवस्थापयन्तः, तदनुगृहीतं श्रीमद्वैष्णवं पुराणं प्रमाणयन्ति ।

---

1. हरेर्गुणान्—पा० क. 2. संपत्तिः—पा० क, ग. 3. अनयैव प्रपत्त्यैवम्—पा० ग.
4. माधवमिति—पा० क. 5. हि—पा० क, ग. 6. यथोक्तवान्—पा० क, ग.
7. यथा—पा० क, ग. 8. तथा—पा० ख, ग.

कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे ।
भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान्" ॥ ३८ ॥

*मनुरप्याह भगवान् गूढं सन्यासवैभवम् ।
अर्चा नारायणस्येति ब्रुवन् वर्णाश्रमक्रियाः ॥ ३९ ॥

"यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गाम् मा कुरून् गमः ॥ ४० ॥

दक्षिणाशापतेरत्र न मुख्या हृदयस्थितिः ।
अन्तः प्रविष्टः शास्ता यो जनानां यमयत्यपि ॥ ४१ ॥

आत्मानमन्तरस्तस्य[1] मृत्युर्मृत्योः हृदि स्थितः ।
तेन सर्वाधिराजेन विवस्वद्बिम्बवर्तिना ॥ ४२ ॥

अविवादस्तु तस्यैव [2]पादयोरात्मनोऽर्पणम् ।
[3]योन्यथा सन्तमात्मानं अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ४३ ॥

तस्मात्सर्वनियन्तारं सर्वेषां च हृदि स्थितम् ।
भगवन्तं प्रपन्ना ये तीर्थादिस्तैर्विशुद्ध्यति[4]" ॥ ४४ ॥

† अर्थोऽयं[5] बहुशः प्रोक्तो शौनकाद्यैर्महर्षिभिः[6] ।
"तावद्गर्जन्तु तीर्थानि सरितश्च सरांसि च ।
यावन्नाभूच्च भूपाल! विष्णुभक्तिपरं मनः ॥ ४५ ॥

---

* "यत्किञ्चिन्मनुरवदत् तद्भेषजम्" इति श्रुतिप्रकीर्तितवैभवस्य मनोः स्मृतिं प्रमाणयन्ति ।

† विष्णुधर्मव्यवस्थापकाचार्यसार्वभौमानां श्रीशौनकादिमहर्षीणां धर्मशास्त्राणि उदाहरन्ति ।

---

1. अन्तरा तस्य—पा० क. 2. पदयोः—पा० ग. 3. अन्यथा—पा० क. 4. तैर्हि शुध्यति—पा० क. 5. अथायम्—पा० क. 6. मनीषिभिः—पा० क.

भवद्विधा भागवताः तीर्थभूताः स्वयं प्रभो ! ।
तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता" ॥ ४६ ॥

*प्रमाणमियदेवालं प्रपत्तेः व्यासशौनकौ ।
प्रोक्तवन्तौ यथा श्रीमद्विष्णुधर्मे च भारते ॥ ४७ ॥

"वृथैव भवतो याता भूयसी जन्मसन्ततिः ।
तस्यामन्यतमं जन्म संचिन्त्य शरणं व्रज" ॥ ४८ ॥

"अथ पातकभीतस्त्वं सर्वभावेन भारत !
विमुक्तान्यसमारम्भो नारायणपरो भव" ॥ ४९ ॥

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते प्रमाणपद्धतिः प्रथमा
श्रीमद्वरदमहागुरुदिव्यचरणनलिने एव शरणम्

---

श्रीः
श्रीमते रामानुजाय नमः
श्रीमते वरदार्यमहागुरवे नमः

## २. अथ स्वरूपपद्धतिः द्वितीया

[1]प्रपत्तिस्वरूपं चाह ; —

बुद्धिरध्यवसायात्मा याच्ञापर्यवसायिनी ।
प्राप्येच्छोरनुपायस्य प्रपत्ते रूपमुच्यते ॥ १ ॥

† "अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ।
तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः" ॥ २ ॥

---

* किं बहुना, विशिष्टधर्मशास्त्रप्रवर्तकाभ्यां अभ्यर्हिततमाभ्यां श्रीमद्व्यास-शौनकाभ्यां श्रीमति महाभारते, श्रीमति विष्णुधर्मे च मुक्तकण्ठमभ्यभाषि—इति परमप्रमाणत्वेन तयोः श्लोकौ प्रमाणयन्ति ।

† प्रपत्तिस्वरूपवैशद्यबोधिनीं श्रीमद्विष्वक्सेनसंहितां समुल्लिखन्ति ।

1. वाक्यमिदं न दृश्यते "क" "ग" पुस्तकयोः ।

शरणागतिशब्देन प्रपत्तिस्तु विशेषिता ।
प्रपत्तिं संश्रयेद्भक्त्या शरणागतिलक्षणाम्" ॥ ३ ॥

इति ह्युक्तं भगवता विष्वक्सेनाय सादरम्[1] ।
आर्तप्रपत्तिरित्युक्ता सैषा पञ्चाङ्गसंयुता ॥ ४ ॥

* "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः ।
त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ॥ ५ ॥

शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ।
आत्मनो दुर्दशापत्तिं विमृश्य च हरेर्गुणान्[2] ॥ ६ ॥

तदेकोपायसंवित्तिः[3] तं प्रपन्नो विमुच्यते" ।
वाक्येष्वेतेषु पञ्चाङ्गा प्रपत्तिर्लक्ष्यते यथा ॥ ७ ॥

† निक्षेपापरपर्यायो न्यासः पञ्चाङ्गलक्षणः[4] ।
सन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥ ८ ॥

[5]आनुकूल्यस्य संकल्पात् प्रातिकूल्यस्य वर्जनात् ।
अङ्गानां लक्ष्यते रूपं लक्ष्मीतन्त्रप्रकारतः ॥ ९ ॥

[6]तेषा[7]मङ्गफलत्वं च [8]तद्रूपं च विभागशः ।
‡ "आनुकूल्यमिदं[9] प्रोक्तं[10] सर्वभूतानुकूलता ॥ १० ॥

अन्तःस्थिताऽहं[11] सर्वेषां भावानामिति निश्चयात्" ।
एतेन व्याप्तिविज्ञानात् प्रपत्तव्यस्य सर्वशः[12] ॥ ११ ॥

---

* पञ्चाङ्गसंयुताया आर्तप्रपत्तेः स्वरूपबोधकान् श्रीमदहिर्बुध्न्यसंहिताश्लोकान् उपपादयन्ति ।

† प्रपत्तेः पर्यायनामानि कीर्तयन्ति ।

‡ प्रपत्तेः पञ्चाङ्गानां स्वरूपफलबोधकलक्ष्मीतन्त्रश्लोकान् समुत्क्षिपन्ति ।

---

1. श्रृण्वते—पा० क. 2. गुणान् हरेः—पा० ग. 3. संपत्तिः—पा० क. 4. संयुतः—पा० क, ग. 5. अर्धश्लोकोऽयं "क" "ग" पुस्तकयोः न दृश्यते । 6. येषाम्—पा० क. 7. अङ्गिफलत्वम्—पा० ग. 8. तद्रूपत्वम्—पा० क. तद्रूपेणैव चोच्यते—पा० ग. 9. इति—पा० क, ग. 10. ज्ञातम्—पा० क. 11. अयम्—पा० क. 12. सर्वतः—पा० क.

आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
हिंसाद्यपायविरतिः उक्ता सर्वेषु जन्तुषु ॥ १२ ॥

[1][ "अङ्गसामग्र्यसम्पत्तेः अशक्तेश्चापि कर्मणाम् ।
अधिकारस्य चाऽसिद्धेः देशकालगुणक्षयात् ॥ १३ ॥

[2]उपाया नैव सिद्ध्यन्ति [3]ह्यपायबहुलास्तथा ।
इति या गर्वहानिस्तु[4] दैन्यं कार्पण्यमुच्यते " ॥ १४ ॥

उपायान्तरदौष्कर्यात् तन्निवृत्तिर्हि[5] सूचिता ।
अकिंचनाधिकारत्वं प्रपत्तेरपि सूचितम् ॥ १५ ॥

* "[6]शक्तेस्सूपसदत्वाच्च[7] कृपायोगाच्च शाश्वतात् ।
ईशेशितव्यसम्बन्धात् अनिदंप्रथमादपि ॥ १६ ॥

रक्षिष्यत्यनुकूलान्नः इति या सुदृढा मतिः ।
स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशनः ॥ १७ ॥

स्वरक्षायोग्यतां ज्ञात्वा प्रपत्तव्यस्य युक्तितः ।
रक्षिष्यतीति विश्वासात् अभीष्टोपायकल्पनम् ॥ १८ ॥

करुणावानपि व्यक्तं शक्तस्वाम्यपि देहिनाम् ।
अप्रार्थितो न गोपायेत इति तत्प्रार्थनामतिः ॥ १९ ॥]

गोपायिता भवेत्येवं गोप्तृत्ववरणं स्मृतम् " ।
याञ्चापर्यवसायित्वं प्रपत्तेरथ[8] उच्यते ॥ २० ॥

प्रपत्तेस्तु प्रपत्तव्यप्रसादद्वारता तथा ।
"तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता ॥ २१ ॥

---

* पञ्चाङ्गसंयुतायाः प्रपत्तेः लक्षणनिरूपणैकताने लक्ष्मीतन्त्रे प्रदर्शयन्ति ।

---

1. कुण्डलितो भागः "ग" पुस्तके १२ श्लोकानन्तरं दृश्यते ॥ 2. उपायेनैव—पा॰ ग. 3. ह्यपाया—पा॰ क. 4. तत्—पा॰ क. 5. तु—पा॰ क. 6. भक्तेः—पा॰ ग. 7. सूपपदत्वाच्च—पा॰ ख. 8. रूपम्—पा॰ क.

केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते " ।
उपाये च फले चैव [1]स्वप्रयत्ननिवर्तनम् ॥ २२ ॥

स्वाम्यायत्तमिति व्यक्तं निक्षेपस्याङ्गिता तथा ।
आर्तप्रपत्तावित्येषां अङ्गानां सन्निधिः तथा ॥ २३ ॥

दृप्तप्रपत्तावेतानि भविष्यन्त्युत्तरोत्तरम् ।
आर्तदृप्तविभागस्तु श्रीमद्रामायणोदितः ॥ २४ ॥

*" आर्तो वा यदि वा दृप्तः परेषां शरणागतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना[2] " ॥ २५ ॥

† यस्य देहान्तरकृते शोको दृप्तस्स उच्यते ।
[3]यश्च प्रारब्धदेहेऽपि शोचत्यार्तस्स उच्यते ॥ २६ ॥

आर्तदृप्तविभागेन प्रपत्तिरियमुच्यते ।
साधनं भगवत्प्राप्तौ स एवेति स्थिरा दृढा[4] ॥ २७ ॥

साध्यभक्तिः [5]स्मृता सैव प्रपत्तिरिति गीयते ।
इमं चार्थमभिप्रेत्य वचो [6]भागवते यथा ॥ २८ ॥

‡ " प्रपन्नश्चातको यद्वत् प्रपत्तव्यः कपोतवत् ।
रक्ष्यरक्षकयोरेतत् लक्षणं[7] लक्ष्यमेतयोः " ॥ २९ ॥

प्रपत्तिरपि सामान्यशास्त्रेऽन्यत्र प्रपञ्चिता ।
० " यद्येन कामकामेन न साध्यं साधनान्तरैः ॥ ३० ॥

---

* आर्तदृप्तप्रपत्तिविभागबोधकं श्रीमद्रामायणश्लोकमुदाहरन्ति ।
† दृप्त--आर्तप्रपत्ती विवेचयन्ति ।
‡ श्रीमद्भागवतवचः संवादयन्ति ।
० प्रपत्तिप्रभावबोधकं शास्त्रान्तरं समुल्लिखन्ति ।

---

1. स्वप्रयत्नात्--पा० क. 2. कृतात्मभिः--पा० ख. 3. यस्तु--पा० 4. स्थितिर्यथा--पा० क. 5. तु या--पा० ग. 6. भगवतो--पा० ग. 7. लक्ष्यं लक्षणम्--

मुमुक्षुणा [1]न सांख्येन [2]योगेन न च भक्तितः ।
प्राप्यते परमं धाम यतो नावर्तते पुनः ॥ ३१ ॥

तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ! ।
[3](परमात्मा च तेनैव साध्यते पुरुषोत्तमः) ॥ ३२ ॥

साधनान्तरदुस्साधं[4] प्राप्यं यल्लोकवेदयोः ।
सुखेन प्राप्यते[5] येन सा प्रपत्तिरिति स्थितिः" ॥ ३३ ॥

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते स्वरूपपद्धतिः द्वितीया
श्रीमद्वरदार्यमहागुरुदिव्यचरणावेव शरणम्

---

श्रीः
श्रीमते रामानुजाय नमः
श्रीमते वरदार्यमहागुरवे नमः

## ३. अथ अधिकारिपद्धतिः तृतीया

[3]अधिकारिस्वरूपमाह :—

* अनन्योपायशक्तस्य प्राप्येच्छोरधिकारिता ।
प्रपत्तौ सर्ववर्णस्य सात्त्विकत्वादियोगतः[7] ॥ १ ॥

"सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा" ।
इति सर्वफलप्राप्तौ सर्वेषां विहिता यतः ॥ २ ॥

प्रपत्तेर्वाचको मन्त्रः कठवल्ल्यादिषु स्मृतः[8] ।
अयं पुराणे पाद्मे च[9] पराशर — वसिष्ठयोः ॥ ३ ॥

संवादे प्रणवैकार्थः पञ्चविंशतिवर्णकः ।
ऋष्यादिसहितः साङ्गः भूयोभूयः प्रपञ्च्यते ॥ ४ ॥

---

* प्रपत्तेः सर्वाधिकारतां प्रपञ्चयन्ति ।

---

1. च—पा० ख. यत्—पा० ग. 2. कर्मणा—पा० ग. 3. अर्धश्लोकोऽयं "ग" पुस्तके न । 4. दुस्साध्यम्—पा० क. 5. साध्यते—पा० क. 6. वाक्यमेतत् न दृश्यते "क" "ग" पुस्तकयोः । 7. योगिनः—पा० क, ग. 8. श्रुतः—पा० ग. 9. तु—पा० क, ग.

तत्र सर्वाधिकारत्वं सकृदुच्चार्यता[1] तथा ।
विधीयते तथाऽन्यत्र[2] [3]शास्त्रे भगवताऽपि च ॥ ५ ॥

त्रैवर्णिकेतरस्यापि द्वये तस्माद्धिक्रिया ।
[4]धर्मिग्राहकमानेन [5]यत्सिद्धं लोकवेदयोः ॥ ६ ॥

यथा हि[6] रथकारादेः [7]अग्न्याधानादिवैदिके ।
यथाऽऽज्यावेक्षणादौ तु मन्त्रे पत्न्याः प्रमाणतः ॥ ७ ॥

यद्वाऽऽधीतक्रमापायात् स्वरादेर्वा विलोपतः ।
द्वयस्य सर्वाधिकृतिः सर्वेषां तान्त्रिकं तु वा ॥ ८ ॥

*अज्ञ-सर्वज्ञ-भक्तानां प्रपत्तावधिकारिता ।
उपायान्तरविज्ञानाशक्तेरज्ञस्य युज्यते ॥ ९ ॥

सदृशोपायवैधुर्यं[8] साक्षाद्भगवतो विदन् ।
सर्वज्ञः शरणं याति योगमार्गपराङ्मुखः ॥ १० ॥

सर्वकालं प्रेमवशात् भजन् भक्तोऽप्यनन्यधीः ।
उपायं वाऽप्युपेयं वा क्षमोऽन्यं नावलम्बितुम्[9] ॥ ११ ॥

जितन्तामन्त्रविवृतौ शौनकेन यदीरितम् ।
† "अज्ञसर्वज्ञभक्तानां गतिर्गम्यो भवेद्धरिः" ॥ १२ ॥

‡ "इदं शरणमज्ञानां इदमेव विजानताम् ।
इदं तितीर्षतां पारं इदमानन्त्यमिच्छताम्" ॥ १३ ॥

---

* **अज्ञ-सर्वज्ञ-भक्तानां प्रपत्तावधिकारितां व्यवस्थापयन्ति ।**

† **शौनकवचो दर्शयन्ति ।**

‡ **लक्ष्मीतन्त्रमुदाहरन्ति ।**

---

1. उच्चारिता—पा० क. 2. ह्यत्र—पा० क. 3. श्रीशास्त्रे भगवानपि—पा० ग.
4. धर्मिग्राहिप्रमाणेन—पा० क, ग. 5. सिद्धेयं लोकवेदयोः—पा० क, ग. 6. तु—पा० क.
7. अग्न्याधाने तु —पा० क, ग. 8. दौर्हार्यात्—पा० क. 9. नान्यावलम्बनम्—पा० ग.

इति लक्ष्म्या च[1] तन्त्रेऽपि प्रपत्तावनुवर्णितम्[2] ।
आस्तिक्यादिगुणोपेतं शास्त्रं वक्त्यधिकारिणम् ॥ १४ ॥

*यथाऽऽह भगवान् शास्त्रे विष्वक्सेनाय शृण्वते ।
"[3]य एवं शरणं गच्छेत् कृतकृत्यो भविष्यति ॥ १५ ॥

एतद्रहस्यं वेदानां पुराणानां च सम्मतम् ।
गुह्या[4]द्गुह्यतमं प्रोक्तं[5] निगमान्तेषु कीर्तितम् ॥ १६ ॥

नादीक्षिताय वक्तव्यं नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं नास्तिकाय कदाचन ।
गुरुभक्तिर्न यस्यास्ति बीजपिण्डपदादिषु[6] ॥ १७ ॥

नोपदेशस्तु [7]यस्यास्ति न वक्तव्यं हितार्थिना ।
इत्युक्तवान् जगन्नाथो द्विरदानन मां प्रति ।

मयाऽपि तव भक्तस्य[8] कथितं यच्छ्रुतं पुरा" ॥ १८ ॥

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते अधिकारिपद्धतिः तृतीया
श्रीमद्वरदार्यमहागुरुदिव्यचरणावेव शरणम्

---

श्रीः
श्रीमते रामानुजाय नमः
श्रीमते वरदार्यमहागुरवे नमः

## ४. अथ गुरूपासनपद्धतिः चतुर्थी

संसारोद्विग्नमनसा तापत्रितयभीरुणा ।
विरक्तेनेह चाऽमुत्र फले गम्यो गुरुर्महान् ॥ १ ॥

---

* प्रपत्तेर्माहात्म्यबोधकं विष्वक्सेनसंहितावचनमुपक्षिपन्ति ।

---

1. स्वतन्त्रेऽपि---पा० क, ग. 2. प्रपत्त्युक्तौ तु वर्णितम्---पा० क, ग. 3. एवं शरणं गच्छन्---पा० क, ग. 4. गुह्यं मया---पा० ग. 5. लोके---पा० क. 6. मन्त्रज्ञानप्रदादिषु---पा० क. बीजपिण्डवरादिषु---पा० ग. 7. तस्य---पा० ग 8. तुभ्यं भक्ताय---पा० क.

* परीक्ष्य लोकान् कर्मचितान् विप्रो निर्विण्णमानसः ।
[1]कृतेन मोक्षो नास्तीति तज्ज्ञानार्थं गुरुं व्रजेत् ॥ २ ॥

श्रोत्रियं ब्रह्मनिष्णातं[2] प्रीणयेद्वस्तुभिः प्रियैः ।
तस्मै प्रशान्तचित्ताय शिष्याय प्रणताय[3] च ॥ ३ ॥

दद्यादष्टाक्षरं सत्यं ब्रह्म नारायणं परम् ।
तां ब्रह्मविद्यां प्रवदेदित्यर्थं[4] श्रुतिराह हि ॥ ४ ॥

गुरोश्शिष्यस्य विद्याया लक्षणं कालमेव च[5] ।
सामान्यतो विशेषाच्च भगवान् शास्त्र उक्तवान् ॥ ५ ॥

† "त्रिषु वर्गेषु[6] सम्भूतो मामेव शरणं गतः ।
नित्यनैमित्तिकपरो मदीयाऽऽराधने रतः ॥ ६ ॥

आत्मीयपरकीयेषु समो देशिक उच्यते ।
आस्तिको धर्मशीलश्च शीलवान् वैष्णवः शुचिः[7] ॥ ७ ॥

गम्भीरश्चतुरो धीरः शिष्य इत्यभिधीयते ।
नानुकूल्यं न नक्षत्रं न तीर्थादिनिषेवणम् ॥ ८ ॥

न पुनश्चरणं नित्यं जपं [8]वाऽपेक्षते ह्ययम् ।
नमस्कृत्य गुरून् [9]दीर्घप्रणामैस्त्रिभिरादृतः[10] ॥ ९ ॥

---

* परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृते तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वान् उपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥

† श्रुतिप्रतिपादितमर्थं भगवच्छास्त्रेण उपबृंहयन्ति ।

---

1. नास्तीति कर्मणा मोक्षः—पा० क. 2. निष्ठं तम्—पा० क. 3 प्रयताय—पा० व 4. [illegible]—पा० क. 5. हि—पा० क, ग. 6. वर्णेषु—पा० क. 7. वैष्णवार्च [illegible]—पा० क. 8. न—पा० क, ग. 9. दीर्घैः—पा० ग. 10. आदितः—पा० क

गृह्णीयान् मन्त्रराजानं[1] निधिकांक्षीव निर्धनः ।
परंपरामुपदिशेत् गुरूणां प्रथमं गुरुः ॥ १० ॥

वाचयित्वा द्वयं साङ्गं प्रपत्तिं मानसीं दिशेत् ।
अनुकांक्षन् सदा शिष्यं गुरुरौरसपुत्रवत् ॥ ११ ॥

[2]विद्वान् समाहितो भूत्वा ग्राहयेदुपधिं विना ।
[3]तदौपनिषदीं विद्यां विश्वासज्ञानवर्धिनीम् ॥ १२ ॥

अन्यामाध्यात्मिकीं [4]विद्यां शिष्यावस्थानुरूप्यतः[5] ।
[6]तस्मै प्रशान्तचित्ताय कृपया निस्पृहो वदेत् ॥ १३ ॥

दत्त्वा तु दक्षिणां तस्मै यथाशक्ति यथाविधि ।
तमर्चयेद्यथाकालं[7] हितं चास्य [8]समाचरेत्" ॥ १४ ॥

गुरोर्वैभवमाख्याति [9]जयाख्याऽपि च संहिता ।
'गुरुरेव परं ब्रह्म गुरुरेव परं धनम् ॥ १५ ॥

गुरुरेव परा विद्या गुरुरेव परायणम् ।
गुरुरेव परः कामो गुरुरेव परा गतिः ॥ १६ ॥

[10]यस्मात्तदुपदेष्टाऽसौ तस्माद्गुरुतरो गुरुः ।
अर्चनीयश्च वन्द्यश्च कीर्तनीयश्च सर्वदा ॥ १७ ॥

ध्यायेज्जपेन्नमेद्भक्त्या भजेदभ्यर्चयेन्मुदा ।
उपायोपेयभावेन तमेव शरणं व्रजेत्" ॥ १८ ॥

इति सर्वेषु वेदेषु सर्वशास्त्रेषु सम्मतम् ।
एवं द्वयोपदेष्टारं भावयेद् बुद्धिमान् धिया[11] ॥ १९ ॥

---

ख्यसंहितावचनानि दर्शयन्ति ।

---

तम्—पा० क. 2. विद्याम्—पा० क. 3. आदावुपनिषद्विद्याम्—पा० ग. क. 5. अनुरूपतः पा०—क, ग. 6. श्लोकार्धोऽयं न दृश्यते "क" : न ॥ 7. जगन्नाथम्—पा० क. 8. प्राप्यं चास्य—पा० क, ग. नसंहिता—पा० क. 10. अर्धश्लोकोऽयं "ग" पुस्तके न ॥ 11. मुदा—पा० क.

* " शरीरं वसु विज्ञानं वासः कर्म गुणानसून् ।
गुर्वर्थं धारयेद्यस्तु स शिष्यो नेतरस्स्मृतः " ॥ २० ॥

" नारायणोऽपि [1]विकृतिं याति गुरोः प्रच्युतस्य दुर्बुद्धेः ।
कमलं जलादपेतं शोषयति रविर्न तोषयति[2] ॥ २१ ॥

यो विष्णोः प्रतिमाकारे लोहभावं करोति च ।
यो गुरौ मानुषं भावं उभौ नरकपातिनौ ॥ २२ ॥

सामान्यतो विशेषाच्च [3]यस्माद्धर्मान् सनातनान्[4] ।
[5]आचिनोति स आचार्यः तस्मै द्रुह्येन्न किंचन ॥ २३ ॥

' गु ' शब्दस्त्वन्धकाराख्यो[6] ' रु ' शब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वात् " गुरु " रित्यभिधीयते " ॥ २४ ॥

† मनुरप्याह भगवान् " वन्द्यो बालोऽपि मन्त्रदः ।
[7]ज्यैष्ठ्यं वेदान्त[8]विज्ञानात्[9] विप्राणामिति चोदितम् ॥ २५ ॥

अध्यापयामास पितॄन् शिशुराङ्गीरसः कविः ।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ २६ ॥

ते तमर्थमपृच्छन्त देवानागतमन्यवः[10] ।
देवाश्चैतान् समेत्योचुः न्याय्यं वश्शिशुरुक्तवान् ॥ २७ ॥

बालोऽपि विप्रो वृद्धः स्यात् पिता भवति मन्त्रदः[11] ।
अज्ञं [12]हि बालमित्याह पितेत्येव च मन्त्रदम् ॥ २८ ॥

---

* जयसंहितावचनानि उदाहरन्ति । † मनुवचनं प्रमाणयन्ति ।

---

1. विमुखम्—पा० क. 2. पोषयति—पा० ग. 3. यस्तु धर्मानशेषतः—पा० क. 4. अशेषतः—पा० ग. 5. आचारयेद्यः—पा० ग. 6. अन्धकारस्स्यात्—पा० ग. 7. ज्येष्ठो—पा० ग. 8. वेदार्थ—पा० क. 9. विज्ञाने प्रमाणमिति चाहतम्—पा० ग. 10. आहितमन्यवः—पा० ग. 11. मन्त्रतः—पा० ग. 12. तु—पा० क.

न हायनैर्न पलितैः [1]न च वित्तैर्न बन्धुभिः[2] ।
ऋषयश्चक्रिरे धर्मान्[3] योऽनूचानः स नो महान् ॥ २९ ॥

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धनतो ज्यैष्ठ्यं शूद्राणा[4]मेव जन्मतः ॥ ३० ॥

गुरोश्च गुरवस्सर्वे पूजनीया विशेषतः ।
गुरुदारसुतादौ तु गुरुवद्वृत्तिमाचरेत् ॥ ३१ ॥

[5]धर्मव्यतिक्रमस्त्याच्चेत् गुरुर्बोध्यो रहस्यपि ।
[6]पतनीयं गुरोः कर्म यद्यशक्यमपोहितुम् ॥ ३२ ॥

बोधनाद्दैवभजनात् सत्संगपरिवेषणात् ।
[7]सद्गुरूनुपसेवेत हित्वा तदनुवर्तनम् ॥ ३३ ॥

तस्यापि [8]हितमाकांक्षन् मुच्यते नाऽत्र संशयः ।
यदि शिष्यः पतेन्मार्गात् तं प्रयत्नेन वारयेत् ॥ ३४ ॥

श्रियः पत्युः पदाम्भोजे गुरुर्याचेत तद्धितम् ।
प्रसादयेद्भगवता [9]आत्मनाऽपि तमुद्धरेत् ॥ ३५ ॥

तेन सम्भाषणादीनि वर्जयेदनिवर्तने ।
[10]न निश्वासमभिव्यक्तं विसृजेद्गुरुसन्निधौ ॥ ३६ ॥

गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः " ॥ ३७ ॥

आचार्यस्य प्रसादेन[11] मम सर्वमभीप्सितम् ।
प्राप्नुयामिति विश्वासो [12]यस्यास्ते स सुखी भवेत् ॥ ३८ ॥

---

1. न वित्तैर्नच—पा० ग. 2. बान्धवैः—पा० क. 3. धर्मम्—पा० क, ग. 4. धनधान्यतः—पा० क. धान्यधनतः—पा० ग. 5. नियमातिक्रमः—पा० क, ग. 6. प्रयत्नेन—पा० ग. 7. तद्गुरून्—पा० क, ग. 8. प्रियम्—पा० क. 9. नात्मनोऽपि—पा० ग. आत्मनोऽपि—पा० ख. 10. निश्वासमपि सुव्यक्त—पा० क. 11. प्रदानेन—पा० क. प्रभावेन—पा० ग. 12. यस्यास्ति—पा० ग.

येनैव गुरुणा यस्य [1]न्यासविद्या प्रदीयते ।
तस्य वैकुण्ठदुग्धाब्धिद्वारकाः सर्व एव सः[2] ॥ ३९. ॥

ऐहिकामुष्मिकं सर्वं [3]गुरुरष्टाक्षरप्रदः ।
इत्येवं ये न मन्यन्ते त्यक्तव्यास्ते मनीषिभिः ॥ ४० ॥

एकाक्षरप्रदातारमाचार्यं योऽवमन्यते ।
श्वानयोनि[4]शतं प्राप्य चण्डालेष्वभिजायते ॥ ४१ ॥

* महावराहो भगवानाह जन्माब्धितारणे ।
" नावं नृतनुमात्मानं अनुकूलाऽनिलं गुरुम् ॥ ४२ ॥

कर्णधारमतो देही गुरुणा संस्कृतिं तरेत् ।
नृदेहमाद्यं प्रतिलभ्य दुर्लभं प्लवं सुकल्यं गुरुकर्णधारम् ।
† मयाऽनुकूलेन[5] नभस्वतेरितम् पुमान् भवाब्धिं न तरेत्स हात्महा

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते गुरूपासनपद्धतिः चतुर्थी
श्रीमद्वरदमहागुरुदिव्यचरणनलिने एव शरणम्



---

* वाराहपुराणवचनमुपदर्शयन्ति ।

† महता पुण्यपापेन क्रीतेयं कायनौस्त्वया ।
तत् त्वं दुःखोदधेः पारं त्वर यावन्नभिद्यते ॥

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
मानुष्यमर्थं सुखनित्यमपीह धीरः ।
तूर्णं यतेतनपतेदनुमृत्युयावत्
निर्भेदसार्धविषयः खलु सर्वत स्यात् ॥ —पा० १

---

1. सम्यग्विधा—पा० क. 2. हि—पा० क. 3. ममाष्टाक्षरदो गुरुः—पा० क. ग
4. सहस्रेषु—पा० क. 5. आनुकूल्येन—पा. ग.

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते वरदार्यमहागुरवे नमः

## ५. अथ भगवत्परिचर्यापद्धतिः पञ्चमी

एवं गुरुप्रसादेन [1]शेषित्वज्ञानपूर्वकम् ।
देवतान्तरवन्नित्यं [2]शब्दादीनपि कुत्सयन्[3] ॥ १ ॥

[4]विष्णुप्राप्ति[5]फलाकांक्षी विष्णूपायो हि वैष्णवः ।
एकान्ती तु विनिश्चित्य देवताविषयान्तरैः ॥ २ ॥

[6]भक्त्युपायं समं कृष्णप्राप्तौ कृष्णैकसाधनः[7] ।
देवतान्तरशब्दादिभक्तिकृष्णाख्यहेतुषु ॥ ३ ॥

साम्यकृत् परमैकान्ती हरौ स्वामीति बुद्धिमान् ।
* [8]किं कुर्वाणः सदाकालं [9]भगवत्पादपद्मयोः ॥ ४ ॥

शेषत्वमात्मनो [10]जानन् सार्थयन् कालमाक्षिपेत् ।
विज्ञाय मूलमन्त्रार्थं [11]द्वयैकार्थतया गुरोः ॥ ५ ॥

तदेकशरणो भूत्वा हरिं तेन समर्चयेत् ।
त्रैकाल्यमर्चनं कुर्यात् मूलमन्त्रेण शक्तितः[12] ॥ ६ ॥

" सर्ववेदान्तसारार्थः संसारार्णवतारणः[13] ।
मन्त्राणां परमो मन्त्रो गुह्यानां गुह्यमुत्तमम् ॥ ७ ॥

पवित्राणां पवित्रं च मूलमन्त्रः सनातनः ।
मुमुक्षूणां सदा जप्यं भुक्तिमुक्तिफलप्रदम् ॥ ८ ॥

---

* भगवन्तं प्रपन्नोऽसौ हरौ स्वामीति भक्तिमान् ।—पा० ग.

---

1. शेषत्व—पा० क. 2. शब्दादीः—पा० ग. 3. कुत्सयेत्—पा० क. 4. कृष्ण-प्राप्ति—पा० ग. 5. फलैकार्थी भक्त्युपायो हि-पा० क, ग. 6. भक्त्युपायसमम्—पा० ग. 7. साधकः—पा० ग. 8. किंकुर्वाणस्सदाकालं—पा० क, ग. 9. मनस्तत्पाद-पद्मयोः—पा० क. 10. ज्ञात्वा—पा० क, ग. 11. मन्त्रेण—पा० ग. 12. भक्ति-तः—पा० क. 13. तारकः—पा० क.

वैष्णवानां सदा जप्यं भक्तिज्ञानविवर्धनम्[1] ।
मन्त्राणामाश्रयं[2] दिव्यं सर्वपापप्रणाशनम् ॥ ९ ॥

समाहितमना भूत्वा जपं कुर्यादतन्द्रितः " ।
इत्थं गजाननादीनां श्रीमत्सेनेशशासनात् ॥ १० ॥

[[3]अनेन वैष्णवः कुर्यात् हरेरर्चादिकं सदा ।
द्वयेन वार्चनं कुर्यात् गुरुवन्दनपूर्वकम् ॥ ११ ॥

कृतलक्षण एवायं अर्चयेद्वैष्णवो हरिम् ।]
* व्यासस्तु भगवानाह " वर्णैस्तु कृतलक्षणैः ॥ १२ ॥

अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः । "
लक्षणं द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ॥ १३ ॥

शङ्खचक्रादिकं बाह्यं अन्यद्रागाद्यपेतता ।
तथाच सर्वोपनिषत्सिद्धं [4]चक्रादिधारणम् ॥ १४ ॥

† अथर्वोपनिषद्व्यक्तं विदधाति विपश्चिताम् ।
" दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ॥ १५ ॥

सव्ये तु शङ्खं बिभृयात् इति [5]ब्रह्मविदो विदुः । "
तत्र श्रुतित्वसन्देहे [6]खिलमन्त्रोऽपि तत्समः ॥ १६ ॥

महत्परिग्रहान्नास्ति सन्देहस्तत्र चेद्भ्रमः[7] ।
‡ [8]पाद्मं पुराणमाग्नेयं क्रोश " त्युद्वाहुरप्युत[9] ॥ १७ ॥

---

* तप्तचक्राङ्कनधरैरेव भगवदर्चनं कार्यमित्यत्र व्यासवचनमुपक्षिप्यते ।
† अथर्वोपनिषदं प्रमाणयन्ति ।
‡ पञ्चायुधानां धारणे पाद्ममाग्नेयं च पुराणं संवादयन्ति ।

---

1. प्रवर्धनम्—पा० क. ग. 2. आश्रयेत्—पा० ग. 3. कुण्डलितो भागः " ग पुस्तके न ॥ 4. तप्तादि—पा० ग. 5. वेदविदो—पा० ग. 6. खिलमन्त्रेऽपि तत्समम्—पा० क, ग. 7. समम्—पा० क. ; मतः—पा० ग. 8. तथा पुराणम्—पा० क, ग 9. चात्यतः—पा० क. ; अप्यतः—पा० ग.

पञ्चायुधानि धार्याणि भक्तिश्रद्धोपबृंहितः ।
ललाटे [1]मूर्ध्नि हृद्बाह्वोः एकैकं पृथक् पृथक् ॥ १८ ॥

ललाटे तु गदा धार्या मूर्ध्नि चापं[2] तथा परम् ।
नन्दकं चैव हृन्मध्ये शङ्खचक्रे भुजद्वये ॥ १९ ॥

लोहैरनलसन्तप्तैः तत्तन्मन्त्राधिवासितैः ।
अङ्कयेत्," * वृद्धमनुरप्येतदाहाऽऽदराद्यथा ॥ २० ॥

"ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते नरः ।
शुभानि तस्य वर्धन्ते [3]त्वशुभन्तु प्रणश्यति" ॥ २१ ॥

† काल उक्तो भगवता शास्त्रे चक्रादिधारणे ।
"[4]उत्तमः षोडशादर्वाक् आपञ्चाशस्तु[5] मध्यमः ॥ २२ ॥

अतः परं वै ह्यधम[6] इति कालव्यवस्थितिः ।
विना तु वार्षिकान् मासान् सर्वे मासाश्शुभावहाः[7] ॥ २३ ॥

स्थानं प्रमाणं द्रव्यं च[8] पाञ्चरात्रे विशेषतः ।
विहितं तत्प्रकारेण धारयेदूर्ध्वपुण्ड्रकम् ॥ २४ ॥

प्रशस्ते पर्वताग्रादौ जातया श्वेतमृत्स्नया ।
ऊर्ध्वपुण्ड्रं [9]ततः कार्यं वैष्णवैस्तु विशेषतः ॥ २५ ॥

[10]विमलान्यूर्ध्वपुण्ड्राणि सान्तरालानि यो नरः ।
करोति विमलं तेन[11] मन्दिरं [12]मे करोति सः ॥ २६ ॥

---

* वृद्धमनुवचनमुदाहरन्ति ।

† चक्रादिधारणे कालं सप्रमाणं निरूपयन्ति ।

---

1. मूर्ध्निवत्—पा॰ ग. 2. शार्ङ्गं ततः—पा॰ ग. 3. हि—पा॰ क, ग. [4. उ]त्तमम्—पा॰ ख, ग. 5. पञ्चविंशात्तु मध्यमम्—पा॰ ग. 6. अधमम्—पा॰ ग. [7. ...]ताः—पा॰ क. 8. तु—पा॰ ग. 9. द्विजः कुर्यात्—पा॰ ग. 10. निर्म[...]—पा॰ क. 11. तेषु—पा॰ ग. 12. शेषशायिनः—पा॰ क.

* [1]रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना ।
[2]हिंसादिरहितः कायः केशवाराधनं त्रयम् ॥ २७ ॥

† अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वभूतदया पुष्पं क्षमापुष्पं विशेषतः ॥ २८ ॥

ज्ञानपुष्पं तपःपुष्पं ध्यानपुष्पं [3]तु सप्तमम् ।
सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं भवेत्" ॥ २९ ॥

‡ एवमाभ्यन्तरैर्बाह्यैः चिह्नैर्भूषितविग्रहः ।
स्नातस्तीर्थेषु विधिवत्[4] कृतदेवादितर्पणः ॥ ३० ॥

अष्टोत्तरशतं जप्त्वा मूलमन्त्रमतन्द्रितः[5] ।
सांस्पर्शिकं द्रव्यजातं तथैवाऽऽभ्यवहारिकम् ॥ ३१ ॥

[6]अथ्यौपचारिकं कृत्वा यागभूमेरलंकृतिम् ।
यतीन्द्रोदितनित्योक्तक्रमेणैव यजेद्धरिम् ॥ ३२ ॥

प्रदक्षिणनमस्कारैः स्तोत्रैरेकान्तिसम्मतैः ।
यथा भृत्यो महाराजं प्रीणयेत् प्रेमविह्वलः ॥ ३३ ॥

तथाऽऽत्मस्वामिनं देवं [7]प्रीणयेदुपधिं विना ।
महावराहो भगवान् अगस्त्याय यदुक्तवान् ॥ ३४ ॥

भक्त्यङ्गजातं तत्कुर्यात् यथाकालं समाहितः ।
❖ "मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् ।
स्वयमभ्यर्चनं चैव मदर्थे दम्भवर्जनम् ॥ ३५ ॥

---

* केशवाराधनत्रितयक्रममुपपादयन्ति ।
† विष्णोः प्रीतिकरं पुष्पाष्टकमुल्लिखन्ति ।
‡ भगवदाराधनक्रमं निरूपयन्ति ।
❖ महावराहवचनं प्रमाणयन्ति ।

---

1. रागाद्यदुष्टम्—पा० क. 2 हिंसाद्यदुष्टः—पा० क. हिंसाविरहितः—पा० ग.
3. तथैव च—पा० क, ग. 4. विधिना—पा० क, ग. 5. समाहितः—पा० क, ग.
6. तथा—पा० क.; अथ—पा० ग. 7. तोषयेत्—पा० क. ग.

मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया[1] ।
ममानुस्मरणं नित्यं यच्च मां नोपजीवति ॥ ३६ ॥

[2]भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते ।
स विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पण्डितः ॥ ३७ ॥

तस्मै दियं ततो ग्राह्यं स च[3] पूज्यो यथा ह्यहम्" ।
*एवमर्चावतारं तु[4] यजेच्छौनकवाक्यतः ॥ ३८ ॥

"सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् ।
कृत्वाऽऽत्मनः प्रियकरीं[5] सुवर्णरजतादिभिः ॥ ३९ ॥

[6](तस्यां ब्रह्म समारोप्य मनसा तन्मयो भवेत् ।
तामर्चयेत् तां प्रणमेत् तां भजेत्तां विचिन्तयेत् ॥ ४० ॥

विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ।)
[7]यत्किंचिदपि कुर्वाणो विष्णोरायतने वसेत् ॥
विष्ण्वालये वसेन्नित्यं कुर्यात्तत्कर्म भक्तितः [8] ॥ ४१ ॥

[9]यद्बलं मन्दिरं[10] विष्णोः [11]यदलङ्कारकं प्रियम् ।
भोगोपयुक्तं वा किञ्चित् कुर्यात्तोपायवुद्धितः ॥ ४२ ॥

यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।
सा हानिः तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥ ४३ ॥

---

* अर्चावतारयजनं शौनकवचनेनोपपादयन्ति ।

---

1. विक्रियाः -पा० ग. 2. एवमष्टविधा भक्तिः—पा० क, ग. 3. तु—पा० क. 4. तम्—पा० क, ग. 5. प्रीतिकरीम् --पा० क, ग. 6. कुण्डलितो भागः "ग" पुस्तके न ॥ 7. न किञ्चिदप्यकुर्वाण.—पा० क. 8. शक्तितः—पा० क. 9. यत्कर्म —पा० क; ग. 10. मुदितम्—पा० क. 11. यथालङ्करणम्—पा० क. यदालङ्कारिकं प्रिये—पा० ग.

एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥ ४४ ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा" ॥ ४५ ॥

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते भगवत्परिचर्यापद्धतिः पञ्चमी
श्रीमद्वरदमहागुरुदिव्यचरणनलिने एव शरणम्

---

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते वरदार्यमहागुरवे नमः

## ६. अथ भगवत्परिजनोपासनापद्धतिः षष्ठी

[1]अथ लक्ष्मीं समभ्यर्च्य [2]भूमिनीलादिभिस्सह ।
सूत्रवत्यादिभिश्चैव प्रपन्नेन विशेषतः ॥ १ ॥

गुरूणां विश्रमस्थानं ईशानां जगतोऽस्य च ।
महिषीं देवदेवस्य [3]दिव्यां नित्यानपायिनीम् ॥ २ ॥

[4]यथाऽऽह भगवांच्छास्त्रे [5]विष्वक्सेनाय शृण्वते ।
* "लक्ष्म्यां मयि च युष्मासु भक्तो यो भुवि दुर्लभः" ॥ ३ ॥

अनन्तरं हरेस्सर्वैः उपचारैस्समाहितः ।
तद्वत्समर्चयेद्देवीं देवदेवस्य वल्लभाम्[6] ॥ ४ ॥

---

* श्रीमहालक्ष्म्या आराधनस्यावश्यकताबोधकं विष्वक्सेनसंहितावचमुपाददते ।

---

1. अथ लक्ष्म्यास्समर्चा स्यात्—पा० क, ग. 2. श्रीभूनीलादिभिस्सह—पा०
3. देवीम्—पा० ग. 4. यदाह—पा० ग. 5. विष्वक्सेनस्य शृण्वतः—पा०
6. सर्वदा—पा० क.

अस्या वैभवमाख्याति तत्त्वरत्ने यथा हरिः ।
*"परव्यूहादिकान् पञ्च प्रकारानात्मनो विदन्[1] ॥ ५ ॥

तथा लक्ष्म्याः [2]स्वरूपं च वक्ष्ये शृणु समाहितः ।
गुणतश्च स्वरूपेण व्याप्तिस्साधारणी मता[3] ॥ ६ ॥

[4]मया यथा जगद्व्याप्तं स्वरूपेण स्वभावतः ।
तया व्याप्तमिदं सर्वं नियन्त्री च तथेश्वरी ॥ ७ ॥

मया व्याप्ता [5]तथा साऽपि तथा व्याप्तोऽहमीश्वरः ।
मम तस्याश्च सेनेश ! वैलक्षण्यमिदं शृणु ॥ ८ ॥

मच्छेषभूता सर्वेषामीश्वरी वल्लभा मम ।
तस्याश्च जगतश्चाहमीश्वरो वेदविश्रुतः ॥ ९ ॥

[6]अस्या मम च शेषं हि[7] विभूतिरुभयात्मिका ।
[8]इति श्रुतिशिरस्सिद्धं मच्छास्त्रेष्वपि मानदः[9] ॥ १० ॥

[10]यथा भूमिश्च नीला च शेषभूते मते मम ।
[11]तथाऽऽत्मनाञ्च[12] सर्वेषां ज्ञानतो व्याप्तिरिष्यते ॥ ११ ॥

स्वरूपतस्तु न तयोः [13]व्याप्तिर्वेदान्तपारग ! " ।
† [14]अस्मिन् शास्त्रे [15]यथाऽन्यत्र [16]तथा लक्ष्मीरपि स्वयम् ॥ १२ ॥

---

* श्रीमहालक्ष्म्या वैभवबोधकवचनानि उपाददते ।
† एवं लक्ष्म्या भगवदनपायित्वे भगवद्वचनमुपपाद्य, इदानीं श्रीमहालक्ष्म्या वचनमुपाददते ।

---

1. वदन्—पा० क, ग. 2. प्रभावं च—पा० क. 3. मम—पा० ग. 4. यथा-मया—पा० ग. 5. यथा—पा० क. 6. तस्याः—पा० क, ग. 7. शेषैषा—पा० क. 8. इति हि श्रुतिसिद्धम्—पा० ग. 9. मानद—पा० ग. 10. तथा—पा० क. 11. यथा—पा० क. 12. तु—पा० क. 13. गुणतो व्याप्तिरिष्यते—पा० क. 14. तस्मिन्—पा० क; यथा—पा० ग. 15. तथा—पा० ग. 16. यथा—पा० क.

[1]स्वस्य नाथस्य सम्बन्धं व्याप्तिमैश्वर्यमेव[2] च ।
[3]अपृथग्भूतशेषित्वात् ब्रह्माद्वैतं तदुच्यते ॥ १३ ॥

तस्य या परमा भक्तिः[4] ज्योत्स्नेव हिमदीधितेः ।
सर्वावस्थागता देवी स्वात्मभूताऽनपायिनी ॥ १४ ॥

"अहन्ता ब्रह्मणस्तस्य साहमस्मि सनातनी ।
आत्मास्मि[5] सर्वभूतानां[6] अहंभूतो हरिः स्मृतः ॥ १५ ॥

[7](अहन्ता सर्वभूतानां साहमस्मि सनातनी ।)
येन भावेन भवति वासुदेवः सनातनः ॥ १६ ॥

[8](भवद्भावात्मकं ब्रह्म [9]ततस्तच्छाश्वतं पदम् ।)
भवान्नारायणो देवो [10]भावो लक्ष्मीरहं परा" ॥ १७ ॥

लक्ष्मीनारायणाख्यं तत् ततो[11] ब्रह्म सनातनम् ।
अहंतया [12]समायुक्तो ह्यहमर्थः प्रसिद्ध्यति ॥ १८ ॥

अहमर्थ[13]समुत्था च साऽहन्ता परिकीर्तिता ।
[14]अन्योन्यस्याऽविनाभावात् अन्योन्येन समन्वयात् ॥ १९ ॥

[15]तादात्म्यं विद्धि संबन्धं मम नाथस्य चोभयोः" ।
पराशरस्तु भगवानाहैनां ब्रह्मरूपिणीम् ॥ २० ॥

*"नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुः तथैवेयं द्विजोत्तम ! ॥ २१ ॥

---

* विष्णुपुराणवचनानि उदाहरन्ति ।

---

1. स्वस्याः---पा० क. 2. आह---पा० ग. 3. अथैकभूतशक्तित्वात्---पा० क अपृथग्भूतशक्तित्वात्---पा० ग. 4. शक्तिः---पा० क. 5. च---पा० क. 6. सर्वलोकानाम्---पा० ग. 7, 8. कुण्डलितो भागः "ग" पुस्तकेन ॥ 9. ततस्माच्छाश्वपरम्---पा० क. 10. यथा---पा० ग. 11. अतः---पा० ग. 12. समाक्रान्तो ह्ययमर्थः---पा० क ग. 13. समर्था---पा० क. 14. अन्योन्येन---पा० क, ग. 15. तादर्थ्यम्---पा० क.

देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः ।
[1]स्त्रीनाम्नी लक्ष्मीर्मैत्रेय! नानयोर्विद्यते परम् ॥ २२ ॥

अपराधैकसक्तानां अनर्हाणां [2]चिरं नृणाम् ।
भर्तुराश्रयणे पूर्वं स्वयं पुरुषकारताम्[3] ॥ २३ ॥

[4]वाल्लभ्येनानुतिष्ठन्तीं वात्सल्याद्युपबृंहिणीम् ।
उपायसमये भर्तुः ज्ञानशक्त्यादिवर्धिनीम् ॥ २४ ॥

[5](मुक्तानां भोगवृद्ध्यर्थं सौन्दर्यादिविवर्धिनीम् ।)
आकारत्रयसम्पन्नां अरविन्दनिवासिनीम् ॥ २५ ॥

अशेषजगदीशित्रीं वन्दे वरदवल्लभाम्" ।
[6]तथा भूमिं च नीलां च देवीश्चान्याः सहस्रशः ॥ २६ ॥

[7]नित्यसूरिप्रधानांश्च[8] तत्तन्मन्त्रैः समर्चयेत् ।
यद्धस्तवेत्रवशगं जगच्चिदचिदात्मकम् ॥ २७ ॥

विष्णोरमात्यं सेनेशं परिवारैस्समर्चयेत् ।
ये नित्यसूरयोऽनन्तगरुडाद्याः सहस्रशः ॥ २८ ॥

परिवारैः सहैतांश्च चक्रादीन्यायुधानि च[9] ।
[10]देव्यश्च सूत्रवत्याद्याः या [11]लक्ष्म्याः परिचारिकाः ॥ २९ ॥

ताश्च तत्परिवारं च[12] [13]पूजयेत् तदनुक्रमात् ।
* [14]भजन्ते ये [15]तथा विष्णो[16]रागता मन्दिरे सुराः ॥ ३० ॥

---

* मुमुक्षुभिरुपास्यान् प्रकीर्त्य, इदानीमनुपास्यान् विवेचयन्ति ।

---

1. स्त्रीनामलक्ष्मीः—पा० ग. 2. चिरात्—पा० क. 3. पुरुषकारिणी—पा० क. पुरुषकारिताम्—पा० ग. 4. वात्सल्येन—पा० क. 5. कुण्डलितो भागः "ग" पुस्तके न ॥ 6. यथा भूमिं तु नीलां तु—पा० ग. 7. नित्यं रमां प्रधानां तु—पा० क. 8. तु—पा० ग. 9. अपि—पा० क, ग. 10. दास्यश्च—पा० क. 11. लक्ष्मीपरिचारिकाः—पा० क. 12. परिवारत्वे—पा० क. 13. पूजयन्—पा० क. 14. भजन्तोऽपि—पा० क, ग. 15. ततो—पा० क. 16. अङ्गतां मन्दिरेषु तु—पा० क, आगतान्मन्त्रिणस्सुरान्—पा० ग.

विना विधानं नित्येषु नोपास्यास्ते मुमुक्षुभिः ।
ब्रह्मरुद्रार्जुनव्याससहस्रकरभार्गवाः ॥ ३१ ॥

ककुत्साऽत्रेयकपिलबुद्धाद्या ये सहस्रशः ।
शक्त्याऽऽवेशावतारास्ते विष्णोस्तत्कालविग्रहाः ॥ ३२ ॥

अनुपास्या मुमुक्षूणां यथेन्द्राग्न्यादिदेवताः ।
[1]यथा भगवतैवोक्तं [2]विष्वक्सेनाय शृण्वते ॥ ३३ ॥

* " [3]अनुकालं मुमुक्षूणामनुपास्या[4] विशेषतः ।
अनर्च्यानपि वक्ष्यामि प्रादुर्भावान् यथाक्रमम्[5] ॥ ३४ ॥

चतुर्मुखस्तु भगवान् सृष्टिकार्ये नियोजितः ।
शङ्कराख्यो महान् रुद्रः संहारे विनियोजितः ॥ ३५ ॥

[6]मोहनार्थं तथा बुद्धः व्यासश्चैव महानृषिः ।
वेदानां व्यसने तत्र देवेन[7] विनियोजितः ॥ ३६ ॥

अर्जुनो धन्विनां श्रेष्ठो जामदग्न्यो महानृषिः[8] ।
वसूनां पावकश्चाऽपि वित्तेशश्च तथैव च ॥ ३७ ॥

[9](यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥ ३८ ॥)

यद्यद्विभूतिमत्सत्त्वं [10]श्रिया जुष्टं विशेषतः ।
रागद्वेषविहीनं तु स्वतो बलवदुल्बणम् ॥ ३९ ॥

---

* उक्तार्थस्थेम्ने विष्वक्सेनसंहितावचनान्युपाददते ।

1. यथा हि भवतैवोक्तम्—पा० ग. 2. विष्वक्सेनस्य शृण्वतः—पा० क, ग. 3. अधिकृत्य—पा० क. 4. उपास्याम् हि—पा० क, अनुपास्यान्—पा० ग. 5. क्रमात्—पा० क. 6. मोहनायन्तदो—पा० क. 7. दैवानाम्—पा० क. 8. प्रतापवान्—पा० क. 9. श्लोकोऽयं "क" "ग" पुस्तकयोः न दृश्यते ॥ 10. सत्त्वम्—पा० क, ग.

तत्तदंशं विजानीयात् [1]मम कार्यार्थमादरात् ।
एवमाद्यास्तु सेनेश ! प्रादुर्भावैरधिष्ठिताः ॥ ४० ॥

जीवात्मानस्सर्वे एते नोपास्या[2]स्ते मुमुक्षुभिः ।
आविष्टमात्रास्ते सर्वे कार्यार्थममितद्युते ॥ ४१ ॥

अनर्च्याः सर्व एवैते विरुद्धत्वान्महामुने[3] ।
[4]अहंकृतियुताश्चैते[5] जीवमिश्रा ह्यधिष्ठिताः[6] ॥ ४२ ॥

प्रादुर्भावास्तु मुख्या ये मदंशत्वाद्विशेषतः ।
[7]अजहत्स्वस्वभावा हि दिव्याः प्राकृतविग्रहाः ॥ ४३ ॥

दीपाद्दीप इवोत्पन्ना जगतो रक्षणाय ते ।
[8]अर्च्या एव हि सेनेश संसृत्युत्तरणाय वै ॥ ४४ ॥

* [9]यथाह भगवान् व्यासः पुराणे च पराशरः ।
"ब्रह्माणं शितिकण्ठं च याश्चान्या देवतास्तु ताः[10] ॥ ४५ ॥

प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम्" ।
"अन्ये तु[11] पुरुषव्याघ्र ! चेतसा[12] ये व्यपाश्रयाः ॥ ४६ ॥

अशुद्धास्ते समस्तास्तु[13] देवाद्याः कर्मयोनयः" ॥

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते भगवत्परिजनोपासनापद्धतिः षष्ठी
श्रीमद्वरदमहागुरुदिव्यचरणनलिने एव शरणम्

---

* एतदर्थप्रतिष्ठापनाय परमप्रमाणभूते महाभारत–विष्णुपुराणे उपादद्दते ।

1. महावाक्यार्थम्—पा० क, महाकार्यार्थम्—पा० ग. 2. वर्णदेहिं ते—पा०क, ग. 3. महामते—पा० क. 4. अहङ्कृतियुतश्चेमे—पा० ग. 5. ह्येते—पा० क. 6. मिथ्याप्यधिष्ठिताः—पा० ग. 7. अजहत्स्वभावा ह्येते—पा० क. 8. अनर्च्या—पा० ख. 9. यथा हि भारते व्यासः—पा० ग. 10. स्मृताः—पा० क. 11. ये—पा० क. 12. चेतसो—पा० ग. 13. स्युः—पा० ग.

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते वरदार्यमहागुरवे नमः

## ७. अथ भगवदुपासनापद्धतिः सप्तमी

श्रुतार्थसंशयोच्छित्त्यै बोधनाय परस्परम् ।
साधवस्त्वभिगन्तव्याः सन्तस्सङ्गस्य भेषजम् ॥ १ ॥

[1](यथाह[2] भगवान् व्यासो विषयत्यागभेषजम् ।
सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ॥ २ ॥

[3](साधवस्त्वभिगन्तव्याः सन्तस्सङ्गस्य भेषजम् ।)
विचिकित्सा यदा तु स्यादात्मनः कर्मवृत्तयोः ॥ ३ ॥

*तत्र सम्मर्शिनो युक्ता ये [4]विप्राः सत्पथे स्थिताः ।
तेषां समीपं[5] विनयात् उपेत्यार्थं तु शिक्षयेत् ॥ ४ ॥

यथा ते तत्र वर्तेरन् तथा [6]वर्तेत सात्त्विकः ।
† " अभिगन्तव्याः सन्तो यद्यपि कुर्वन्ति नैकमुपदेशम् ।
[7]यास्तेषां स्वैरकथाः ता एव भवन्ति शास्त्राणि " ॥ ५ ॥

शौनकस्तु यथा प्राह साधूनां दर्शने तथा[8] ।
‡ " सुदूरमपि गन्तव्यं यत्र भागवताः स्थिताः[9] " ॥ ६ ॥

---

*ये तत्र ब्राह्मणास्सम्मर्शिनः । युक्ता आयुक्ताः अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन्, तथा तत्र वर्तेथाः ...... तथा तेषु वर्तेथाः । तै. उ. शी. ४.

† भगवच्छास्त्रम् ।

‡ विष्णुधर्मवचो दर्शयन्ति ।

---

1. कुण्डलितग्रन्थः " क " पुस्तके न दृश्यते ॥ 2. यथा हि—पा० ग. 3. कुण्डलितो भागः " ग " पुस्तके न ॥ 4. युक्ताः—पा० क. 5. समीपे—पा० क. 6. अः तु—पा० क. 7. तेषां स्वैरकथा याः—पा० क. 8. फलम्—पा० क, दर्शनं सत् मू—पा० ग. 9. भगवतः स्थितः—पा० ग.

[1] प्रयत्नेनापि द्रष्टव्याः तत्र सन्निहितो हरिः ।
[2] (इममेवार्थमाह स नारदश्शौनकाय वै ।
पापावसानमिच्छद्भिः नित्यं विष्णुपरायणैः ॥
सुदूरमपि गत्वा च द्रष्टव्या लोकपावनाः ।)
साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ॥ ७ ॥
कालेन फलते तीर्थं सद्यः साधुसमागमः" ।
*शुकोऽपि भगवानाह "सतां तु गुणकीर्तनम् ॥ ८ ॥
चिरकालार्जितस्यैतत् श्रुतस्यैव फलं यथा ।
श्रुतस्य पुंसां [3]सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीरितोऽर्थः ।
[4] तस्माद्गुणानुसरणं मुकुन्दपादारविन्दं हृदयेषु येषाम्[5] ॥ ९ ॥
सद्भिर्गृहागताः सन्तः पूजनीया विशेषतः ।
प्रियवाक्यैः[6] तथाऽर्घ्याद्यैः भोगैरिष्टैर्यथोचितैः" ॥ १० ॥
"नाकांस्ये [7]धावयेत्पादौ" इति स्मृत्याऽन्यभाजने ।
मृण्मयादौ क्षालयीत[8] यथाह भगवान् शुकः ॥ ११ ॥
† "व्यालालयद्रुमा ह्येते ह्यरिक्ताखिलसम्पदः ।
ये गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ॥ १२ ॥

---

* उक्तार्थस्थेम्ने श्रीशुकवचो दर्शयन्ति ।
† पुनश्शुकवचनं प्रमाणयन्ति ।

---

1. द्रष्टव्या हि प्रयत्नेन—पा० क. 2. कुण्डलितो भागः "ख" "ग" पुस्तकयोः न ॥ 3. रुचिर—पा० ग. 4. यत्तद्गुणा—पा० क. 5. पुंसाम्—पा० क. हृदये न येषाम्—पा० ग. 6. वाग्भिः—पा० क. 7. क्षालयेत्—पा० क, ग. 8. क्षालयित्वा तथैव—पा० ग.

[1] (सर्वेषामेव पापानां प्रायश्चित्तं मनीषिभिः ।
वर्णितं भगवद्भक्तपादोदकनिषेवणम् ) ॥ १३ ॥

तत्तीर्थं शिरसा धार्यं तथाङ्गैश्च क्षुरादिभिः ।
पेयमन्तर्यथा सोमे तत्र नाचमनक्रिया ॥ १४ ॥

पीते पादोदके विष्णोः वैष्णवानां तथैव च[2] ।
तत्र नाचमनं [3]कार्यं यथा सोमे द्विजोत्तम ॥ १५ ॥

नारदस्यातिथेः पादौ सर्वासां मन्दिरे स्वयम् ।
कृष्णः प्रक्षाल्य पाणिभ्यां पपौ पादोकं मुनेः ॥ १६ ॥

भोगैरिष्टैश्च शास्त्रीयैः तोषयेद्वैष्णवान् गृहे ।
त्रिविधत्यागपूर्वं तु शेषत्वज्ञानवृद्धये[4] ॥ १७ ॥

भुक्तवस्तु तथा तेषु शेषं भुञ्जीत सात्त्विकः ।
[5] यदुच्छिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥ १८ ॥

[6] (ते त्वघं भुञ्जते पापाः ये पचन्त्यात्मकारणात् ।
तैश्च सम्भाषणादीनि भगवान् शास्त्र उक्तवान् ।
[7] (त्रिषु वर्णेषु सञ्जातो मामेव शरणं गतः ।)
नित्यनैमित्तिकपरो .... .... ॥ )

"वेदशास्त्ररथारूढाः ज्ञानखड्गधरा द्विजाः ।
क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमो मतः " ॥ १९ ॥

---

1. श्लोकोऽयं "ग" पुस्तके न दृश्यते ॥ — अस्य श्लोकस्य स्थाने श्लोकोऽयं "क" पुस्तके परिदृश्यते ॥ तेऽनन्तस्थानि तीर्थानि स गुरुः सा च देवता ।
प्रसिध्यति यदभ्यासे शरदीव जलं मनः ॥

2. विशेषतः—पा० क, ग. 3. कुर्यात्—पा० क, ग. 4. सिद्धये—पा० क. 5. यज्ञशिष्टाशिनः—पा० क, ग. 6, 7. कुण्डपलितो भागः "क" "ख" पुस्तकयोः नदृश्यते ॥

वासुदेवं प्रपन्नानां [1]यान्येव चरितान्यपि[2] ।
तान्येव धर्मशास्त्राणीत्येवं वेदविदो विदुः ॥ २० ॥

वीक्षणादेव[3] सिद्धयन्ति वैष्णवानां हि मानवाः ।
[4] तथा न तीर्थैश्शुध्यन्ति शौनकस्तु यथोक्तवान् ॥ २१ ॥

"[5] न शुध्यति यथा जन्तुः तीर्थवारिशतैरपि ।
[6] लीलयैव यथा भूप[7] वैष्णवानां हि वीक्षणैः[8] ॥ २२ ॥

[9] (वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैससम् ) ॥ २३ ॥

ये तु भागवतानङ्गैः स्पृशन्त्युपविशन्ति च ।
[10]पश्यन्त्यपि च शृण्वन्ति दासस्तेषां महामुने[11] ॥ २४ ॥

सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गमम् ।
सद्भिर्विवादं मैत्रीं च[12] नासद्भिः किंचिदाचरेत्[13] ॥ २५ ॥

यथा पतित्वा[14] सन्मध्ये ययातिः पुनरासवान् ।
स्वपथं तत्तथा सत्सु पतितो न विमुह्यति[15] " ॥ २६ ॥

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते [16]भगवदुपासनपद्धतिः सप्तमी
श्रीमद्वरदार्यमहागुरुदिव्यचरणावेव शरणम्.

---

1. तान्येव—पा॰ ग. 2. वै—पा॰ ग. 3. शुद्धयन्ति—पा॰ क, ग. 4. यथा—पा॰ ग. 5. न तथा शुद्धयते—पा॰ ग. 6. लीलया तु—पा॰ क. 7. भुवौ—पा॰ ग. 8. वीक्षितैः—पा॰ क. 9. कुण्डलितश्श्लोकः "क" "ग" पुस्तकयोः न दृश्यते ॥ 10. वदन्ति—पा॰ क. 11. महात्मनाम्—पा॰ ग. 12. वा—पा॰ ग. 13. उच्चरेत्—पा॰ ग. 14. तन्मध्ये—पा॰ क. 15. विमुच्यते—पा॰ क, पतितोऽपि न मुह्यति—पा॰ ग. 16. भगवतपरिचर्यापद्धतिः—पा॰ क.

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते वरदार्यमहागुरवे नमः

# ८. अथ विहितव्यवस्थानपद्धतिः अष्टमी

विहितेषु व्यवस्थानं प्रपन्नानां प्रपञ्च्यते ।
श्रुतिस्मृत्यादिविहितं अनुष्ठेयं तु नैत्यकम्[1] ॥ १ ॥

* "श्रुतिस्मृतिर्ममैवाज्ञे" त्याह लक्ष्मीपतिर्यतः ।
प्रपन्नस्तु विशेषेण शास्त्रेषु विहितान्यपि ॥ २ ॥

[2] कुर्यात् सम्बन्धनादीनि[3] कर्माणि श्रीयतेस्सदा ।
यथा लक्ष्म्या स्वतन्त्रेऽपि शक्रायोक्ता[4] तु पृच्छते ॥ ३ ॥

"† न्यासविद्यैकनिष्ठस्य विहितेषु व्यवस्थितिः ।
उपायापायसन्यासी[5] मध्यमां वृत्तिमाश्रितः ॥ ४ ॥

रक्षिष्यतीति निश्चित्य [6]विक्षिप्य स्वस्वगोचरः ।
बुध्येत देवदेवं तं गोप्तारं पुरुषोत्तमम् ॥ ५ ॥

[7] शक्रः ।

उपायापाययोर्मध्ये कीदृशी स्थितिरम्बिके ।
उपायापायतामेव क्रियाः सर्वावलम्बते ॥ ६ ॥

स्वीकारे व्यतिरेके वा निषेधविधिशास्त्रयोः ।
दृश्यते कर्मणोऽव्यक्तं उपायापायरूपता ॥ ७ ॥

---

* गीता ।

† लक्ष्मीतन्त्रश्लोकानुपपादयति ।

---

1. च नैष्ठिकम्—पा० क. 2. कुर्वन्—पा० ग. 3. चन्दनादीनि—पा० क. 4. अनुपृच्छते—पा० क. 5. सन्त्यागी माध्यमीं स्थितिम्—पा० क. 6. नावबुद्ध्येत बुद्धिमान्—पा० क. 7. शक्र उवाच—पा० ग.

[1] श्री :—

त्रिविधां पश्य देवेश कर्मणो गहनां गतिम् ।
[2] निषेधविधिशास्त्रेभ्यः [3]तां विधां च निबोध मे ॥ ८ ॥

अनर्थसाधनं किंचित् किंचिच्चाप्यर्थसाधनम् ।
अनर्थपरिहाराय किंचित् कर्मोपदिश्यते ॥ ९ ॥

त्रैराश्यं कर्मणामेवं विज्ञेयं शास्त्रचक्षुषा ।
अपायोपायसंज्ञौ तु पूर्वराशी परित्यजेत् ॥ १० ॥

तृतीयो द्विविधो राशिः अनर्थपरिहारकः ।
प्रायश्चित्तात्मकः कश्चित् उत्पन्नानर्थनाशनः ॥ ११ ॥

तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत् ।
क्रियमाणं न कस्मैचित् यदर्थाय प्रकल्पते ॥ १२ ॥

अक्रियावदनर्थाय तत्तु कर्म समाचरेत् ।
एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा[4] ॥ १३ ॥

अस्यां स्थितो जगन्नाथं प्रपद्येत[5] जनार्दनम् ।
एतदुक्तं भवत्यत्र हिंसास्तेयादिकं च यत् ॥ १४ ॥

अनर्थसाधकं[6] कर्म काम्यं त्वर्थस्य साधकम्[7] ।
[8] चैत्यादिकं तथा[9] कर्म सांख्ययोगादिकं तथा[10] ॥ १५ ॥

प्रायश्चित्तं तथा द्वेधा कृतपापप्रणाशनम् ।
चान्द्रायणादिकं[11] त्वेकं अन्यत् सन्ध्यार्चनादिकम् ॥ १६ ॥

---

1. श्रीरुवाच—पा० क, ग. 2. निषिद्ध—पा० क. 3. त्रिविधाम्—पा० क. 4. अपायोपायमध्यमा—पा० क. 5. प्रविशेत—पा० ग. 6, 7. साधनम्—पा० क, ग. 8. चित्रादिकम्—पा० ग. 9. यथा—पा० क. 10. योगोदितं यथा—पा० क. 11. तैष—पा० क.

[1] अत्र हिंसाद्यपायं च काम्यं [2]चौत्यादिकं तथा ।
उपायं कर्मसांख्यादि प्रायश्चित्तादिकं तथा ॥ १७ ॥

चान्द्रायणादिकं कर्म न कुर्याच्च कदाचन ।
भाव्यनर्थस्य यत्कर्म परिहारेण[3] कीर्तितम् ॥ १८ ॥

सन्ध्यार्चा पञ्चयज्ञादि तन्मुमुक्षुभिरादृतम् ।
नैमित्तिकं चाग्रयणं सीमन्तोन्नयनादिकम् ॥ १९ ॥

अग्न्याधानादिकं कार्यं अधिकारे सति द्विजैः ।
निषिद्धकाम्योपायाख्यकर्माण्यानि[4] नाचरेत् ॥ २० ॥

प्रायश्चित्तं [5]प्रपन्नस्य विशेषेण यदुच्यते ।
लक्ष्मीतन्त्रे कमलया निमित्ते तु[6] तदाचरेत् ॥ २१ ॥

शक्तौ प्रतिपदोक्तं स्यात् अशक्तौ शरणागतिः ।
प्रायश्चित्तमिदं [7]ह्येतत् निर्णीतं तु मनीषिभिः ॥ २२ ॥

अनन्यसाध्ये स्वाभीष्टे इति न्यासस्य लक्षणात् ।
शक्तौ प्रतिपदोक्तं स्यात् प्रायश्चित्तं [8]हि सिध्यति ॥ २३ ॥

अन्यथाऽतिप्रसङ्गस्स्यात् अवैष्णवगृहाशने ।
शरणागतहन्तुस्स्यात् प्रपत्त्यैव परिग्रहः ॥ २४ ॥

* [9] (प्रायश्चित्तिरियं सात्र यः पुनश्शरणं व्रजेत्)

[10] श्रीः—

सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम् ।
उपायापायसंयोगे निष्ठया हीयतेऽनया ॥ २५ ॥

---

* लक्ष्मीतन्त्रवचनान्युदाहरन्ति ।

---

1. तत्र—पा० क, ग. 2. चित्रादिकम्—पा० ग. 3. परिहाराय—पा० क. 4. ...नि—पा० क. 5. विशेषेण प्रपन्नस्य—पा० क; अशेषेण प्रपन्नस्य—पा० ग. 6. ...दाचरेत्—पा० ग. 7. इति—पा० ग. 8. विशिष्यते—पा० ग. 9. कुण्डलितो "क," "ग" पुस्तकयोः न दृश्यते ॥ 10. "ख" "ग" पुस्तकयोः न ॥

अपायसम्प्लवे सद्यः प्रायश्चित्तं समाचरेत् ।
प्रायश्चित्तिरियं साऽत्र यत्पुनश्शरणं व्रजेत् ॥ २६ ॥

उपायानामुपायत्वस्वीकारे प्येतदेव हि ।
प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे ॥ २७ ॥

मामेकां देवदेवस्य महिषीं शरणं व्रजेत्" ।
तस्मात् प्रमादात् भक्त्या[1] वा[2] यत्प्रपन्नस्य दुष्कृतम् ॥ २८ ॥

तत्सर्वं [3]शमयत्याशु शरणागतिरेव सा ।
ज्ञात्वाऽप्यपाये पातित्वं[4] यः करोति विमूढधीः ।
भोग एव हि तत्र स्यात् निष्कृतिर्नाऽनयाऽपि हि ॥ २९ ॥

प्रपन्न इति गर्वेण न कुर्यात् पुरु दुष्कृतम् ।
ज्ञात्वा[5]प्यपायकर्माणि कुर्वन् मूढः पतत्यधः ॥ ३० ॥

ज्ञानिनो न च कुर्वन्ति यद्यज्ञानात् प्रमादतः ।
तच्च ज्ञानाग्निना सर्वं दहन्ति विमलाशयाः ॥ ३१ ॥

[6] (अत्राह भगवान् कृष्णः अर्जुनस्य तु शृण्वतः ।
"यथैधांसि समिद्धोऽग्निः भस्मसात् कुरुतेऽर्जुन ॥ ३२ ॥

ज्ञानाग्निस्सर्वकर्माणि भस्मसात् कुरुते तथा" ॥ ३३ ॥

भगवज्ज्ञानविस्रम्भविशुद्धमनसां सताम् ।
शास्त्रोक्तं भगवज्ज्ञानं प्रायश्चित्तं कृतैनसाम् ॥ ३४ ॥)

यस्य यावांश्च विश्वासः[7] तस्य सिद्धिश्च तावती ।
नैतावानिति विश्वासः प्रभावः परिमीयते ॥ ३५ ॥

---

1. बुद्ध्या—पा० क. 2. च—पा० ग. 3. शमयित्वा—पा० ग. 4. व्यपाय-हेतुत्वम्—पा० क. 5. व्यपाय—पा० क. 6, 7. कुण्डलितग्रन्थः "क" पुस्तके नास्ति ॥

वेदोदितं सदाचार[1](माद्रियेत सदा[2] सुधीः ।
[3] अस्मिन् तन्त्रे यथोक्तं तु वैदिकाचारलङ्घने ॥ ३६ ॥

"अविप्लवाय धर्माणां पालनाय कुलस्य च ।
संग्रहाय च लोकानां[4] मर्यादास्थापनाय च ॥ ३७ ॥

प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः ।
मनीषी वैदिकाचारं) मनसाऽपि न लङ्घयेत् ॥ ३८ ॥

यथाहि वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम् ।
[5] (लोकोपयोगिनीं रम्यां बहुसस्यविवर्धिनीम् ॥ ३९ ॥)

लङ्घयन् शूलमारोहेदनपेक्षोऽपि तां प्रति ।
एवं विलङ्घयन् मर्त्यो[6] मर्यादां वेदनिर्मिताम् ॥ ४० ॥

प्रियोऽपि न प्रियो मेऽसौ[7] मदाज्ञाव्यतिवर्तनात् ।
उपायत्वग्रहं तत्र[8] वर्जयेन्मनसा सुधीः" ॥ ४१ ॥

स्ववर्णाश्रमयुक्तं[9] तु देशकालानुरूपतः ।
विशेषविहितं यच्च तत्कुर्याच्छ्रीपतेः प्रियम् ॥ ४२ ॥

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते विहितव्य[10]वस्थानपद्धतिः अष्टमी

श्रीमद्वरदमहागुरुदिव्यचरणनलिने एव शरणम्

---

1. कुण्डलितग्रन्थः "क" पुस्तके नास्ति ॥ 2. तथा—पा० ग. 3. लक्ष्म
तन्त्रे—पा० ग. 4. लोकस्य—पा० ग. 5. अर्धश्लोकोऽयं "ग" पुस्तके न
6. विप्रः—पा० क. 7. असौ मे—पा० क. 8. तस्य—पा० क. 9. रूपम्—पा० ग
10. व्यवस्थापना—पा० क.

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते वरदार्यमहागुरवे नमः

## ९. अथ वर्जनीयपद्धतिः नवमी

वर्जनीयं [1]प्रपन्नानां वर्ण्यते लोकवेदयोः ।
स्वावस्थादेशकालानां विरुद्धं वर्जयेत् सदा[2] ॥ १ ॥

वर्णाश्रमविरुद्धं यत् मन्वाद्युक्तं विशेषतः ।
स्वाधिकारविरुद्धं च [3]शास्त्रोक्तं न समाचरेत् ॥ २ ॥

सामान्यशास्त्रानुज्ञातं[4] विरुद्धं यद्विशेषतः ।
चतुष्पद्वनस्पत्योः मङ्गलादेः[5] प्रदक्षिणम् ॥ ३ ॥

प्रदोषे शङ्करार्चादि पापहानिकरं [6]नृणाम् ।
न कुर्यात् परमैकान्ती काम्यं लोकद्वयप्रदम् ॥ ४ ॥

सामान्यशास्त्रविहितं[7] विरुद्धं[8] चाङ्कनादिकम्[9] ।
गतिनृत्तादिकं यत्तु विशेषागमचोदितम्[10] ॥ ५ ॥

तत्सर्वं वैष्णवः[11] कुर्यात् यथोक्तौ यमशौनकौ[12] ।
* "हरिकीर्तिं[13] विनैवान्यत्[14] ब्राह्मणेन नरोत्तम ।
भाषागानं न गातव्यं[15] तस्मात्पापं त्वया कृतम् ॥ ६ ॥

---

* अत्र प्रमाणतया श्रीविष्णुधर्मवचनानि समुल्लिखन्ति ॥

---

1. प्रपन्नस्य वर्णितम्—पा० क. 2. सुधीः—पा० क. 3. चेत्—पा० क; विरुद्धं तु शास्त्रोक्तं तु—पा० ग. 4. शास्त्राद्विज्ञातम्—पा० क. 5. मङ्गलार्थप्रदक्षिणम्—पा० क. 6. फलप्रदम्—पा० क, ग. 7. अभिहितम्—पा० क. 8. वा—पा० ग. 9. चोदनादिकम्—पा० क. 10. गोचरम्—पा० ग. 11. वैदिकः—पा० क. 12. यथोक्तं व्यासशौनकौ—पा० क. 13. हरिगीतम्—पा० क. 14. विना नान्यम्—पा० ग. 15. कर्तव्यम्—पा० क, ग.

विष्णोर्गानं च[1] गेयं च नटनं च[2] विशेषतः ।
ब्रह्मन्! ब्राह्मणजातीनां कर्तव्यं नित्यकर्मवत्[3] ॥ ७ ॥

नृत्यतां श्रीपतेरग्रे करसंस्फोटनादिभिः ।
उड्डीयन्ते शरीरस्थाः महापातकपक्षिणः" ॥ ८ ॥

एवं विशेषशास्त्रोक्तं विष्णुचक्रांकनादिकम् ।
विशेषशास्त्रप्राबल्यात् वैष्णवस्तु न वर्जयेत्[4] ॥ ९ ॥

लोकेऽनुष्ठानसंकोचात् लाघवात् फलगौरवात् ।
विमुक्तिसाधनत्वं हि प्रपत्तेरवजानते ॥ १० ॥

[5]अन्यथा योजनाच्चापि प्रमाणानां [6]कुतर्कतः ।
तेन दुष्कृतिनो मूढाः नराणामधमाः स्मृताः[7] ॥ ११ ॥

माययाऽपहृतज्ञानाः [8]आसुरीं योनिमाश्रिताः ।
यान्न पश्येज्जायमानान् पापिनो मधुसूदनः ॥ १२ ॥

ब्रह्मा रुद्रोऽथवा पश्येत् रजसा तमसा वृतान् ।
तैरालापं न कुर्वीत नासद्भिः किंचिदाचरेत् ॥ १३ ॥

कौतस्कुतानां शास्त्राणि[9] तामसान्यवदन् मनुः[10] ।
*वाङ्मात्रेणापि संसर्गं [11]तैस्साकं तु निषेधति ॥ १४ ॥

†"या वेदबाह्या स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" ॥ १५ ॥

---

* कुदृष्टिबाह्यशास्त्राणि तान्यप्यपवदन्मनुः—अर्धश्लोकोऽयं "क" पुस्तके दृश्यते ॥

† मनुवचनमुदाहरन्ति ॥

---

1. नृत्तम्—पा० क. 2. गीतं च नृत्तं च नर्तनं च तथैव तु—पा० ग. 3. सदानघ—पा० क. 4. परमैकान्तिनां हितम्—पा० क. 5. अनन्ययोजनाच्चापि—पा० ग. 6. वितर्कतः—पा० क. 7. तथा—पा० क. 8. आसुरं भावम्—पा० क, ग. 9. तान्यप्यपवदन्—पा० क, ग. 10. मुनिः—पा० ग. 11. सताम्—पा० क, ग.

पाषण्डिनो विकर्मस्थान् विडालव्रतिकाञ्छठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ १६ ॥

प्रपत्तेः प्रतिबन्धस्तु जायते यैर्हि कर्मभिः ।
प्रपन्नो न निषेवेत तादृशानि न किंचन ॥ १७ ॥

देवतान्तरसंभक्तिं नित्यकर्मविधिं विना ।
उपायान्तरनिष्ठां[1] च द्रोहं भागवतेष्वपि[2] ॥ १८ ॥

[3]विश्वासमान्द्यं विषयेष्वतिप्रावण्यमेव च ।
श्रीश्रीशयोः परिजने निन्दनादीनि सर्वशः ॥ १९ ॥

देहावध्यनुवृत्तानि [4]नानुतापयुतानि च ।
प्रायश्चित्तविहीनानि[5] पातकानि महन्ति च ॥ २० ॥

[6]बन्धकानि प्रपन्नस्तु[7] न कुर्यात्तादृशान्यपि ।
तेष्वन्वये सति सतामनुतापो भवेद्यदि ॥ २१ ॥

प्रायश्चित्तं ततः कुर्याद्रहस्यं च प्रकाशकम्[8] ।
[9](प्रपन्नस्यानुतप्तस्य रहस्ये [10]त्वधिकारिता ॥ २२ ॥

प्रायश्चित्ते[11] यथेन्द्राय [12]पृच्छते कमलाऽऽह च ।)
[13]रहस्यं तु प्रपन्नस्य दर्शितं पूर्वपद्धतौ ॥ २३ ॥

एतदर्थमभिप्रेत्य [14]पराशरवचो यथा ॥ २४ ॥

" कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥ २५ ॥

---

...पुराणवचनान्याहुः ।

---

...ष्ठां च द्रोहः—पा० क. 2. च—पा० क. 3. विश्वासयोग्यविषयेष्वे...
... ग. 4. नानास्मृत्युदितानि—पा० क. 5. विधाने तु—पा० क, ग.
...—पा० क. 7. प्रपन्नस्य—पा० क. 8. प्रकाशनम्—पा० क. 9. कुण्ड...
" ग " पुस्तके न ॥ 10. हि—पा० क. 11. प्रायश्चित्तम्—पा० क.
...च्च पृच्छते—पा० क. 13. प्रायश्चित्तम्—पा० ग. 14. वचो भगवतः—पा० ग.

[1](पापे गुरूणि गुरूणि स्वल्पान्यल्पे च तद्विदः ।
प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः ॥ २६ ॥

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम्" ॥ २७ ॥

प्रमादात् क्रियते कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ २८ ॥

*"भगवद्ध्यानयुक्तस्य[2] तद्ध्यानावधिकाः क्रियाः ।
[3](नास्तिकस्य तु मूर्खस्य युक्तं द्वादशवार्षिकम्) ॥ २९ ॥

[4](नास्तिकस्य तु कर्तव्यं यथोक्तं दशवार्षिकम्) ।
[5]एवं विषयभेदेन[6] गुरुलघ्वोर्न संकरः ॥ ३० ॥

क्षेत्रज्ञस्येश्वरज्ञानात् विशुद्धिः परमा मता" ।
इत्येवं याज्ञवल्क्येन ब्रुवताऽऽत्मेशयोरपि[7] ॥ ३१ ॥

शेषशेषित्वविज्ञानात् शुद्धिर्जीवस्य वर्णिता ।
†"अतिपापप्रवृत्तो[8]ऽपि ध्यायन्निमिषमच्युतम् ॥ ३२ ॥

भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ।
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरश्शुचिः" ॥ ३३ ॥

---

*याज्ञवल्क्यवचो निर्दिशन्ति ।

†शौनकवचस्समुल्लिखन्ति ।

---

1. कुण्डलितो भागः "क" पुस्तके २९ श्लोकानन्तरं दृश्यते ॥ 2. तद्ध्यानावधिकाः—पा० क. 3. नरस्य पापमूर्खस्य—पा० क; अर्धश्लोकोऽयं "ग" पुस्तके न 4. कुण्डलितो भागः "क" पुस्तके न ॥ 5. सोऽयम्—पा० ग. 6. तानि कुय वैष्णवः—पा० क. 7. स्वपरात्मनोः—पा० क; बृंहिता स्वपरात्मनोः—पा० ग. 8. इ कोऽपि—पा० क.

इत्यादिशौनकाद्युक्तेः भगवद्ज्ञानिनां नृणाम् ।
कृते पापेऽनुतप्तानां[1] [2]तद्ध्यानावधिकाः क्रियाः ॥ ३४ ॥

देवतान्तरसंसक्तैः[3] सङ्गं त्यक्त्वैव वैष्णवः ।
उपायान्तरसक्तैश्च[4] प्रपन्नैस्सह संवसेत् ॥ ३५ ॥

*न मूर्खमाश्रयेत् साधुः न मूर्खाय गुरुर्वदेत्[5] ।
य आश्रयेदविद्वांसं तामसस्तु तमो विशेत् ॥ ३६ ॥

मूर्खदत्तं तु यज्ज्ञानं उप्तं बीजमिवोषरे ।
अन्योन्यस्मै गुरुच्छात्रौ न द्रुह्येतां कदाचन ॥ ३७ ॥

यो द्रुह्यत्यनयोस्सोऽयं भ्रश्यते मुक्तिमार्गतः ।
अनादिष्टेन गुरुणा मन्त्रेण न हरिं श्रयेत् ॥ ३८ ॥

[6]गुरुं न गर्हयेच्छिष्याः धार्मिकं त्वर्थलोभतः ।
अनिवेद्य गुरोः[7] किञ्चित् नोपभुञ्जीत बुद्धिमान् ॥ ३९ ॥

गुरुविद्वेषिण[8]स्सर्वान् वर्जयेद्वैष्णवोत्तमः ।
विष्णवालये न कुर्यात्तु निष्ठीवनमलादिकम् ॥ ४० ॥

†पादौ [9]न क्षालयेत्तत्र नान्तरा देवपीठयोः ।
गच्छेत्प्रपन्नो नाऽद्वारात् संविशेद्धरिमन्दिरम् ॥ ४१ ॥

[10](कृष्णकम्बलसंवीतो न विशे[11]ज्जातु वैष्णवः ।
विना [12]दीपादिकं कर्म तन्मालाबन्धनादिकम्) ॥ ४२ ॥

---

* शिष्याचार्यव्यवस्थां निरूपयन्ति ।
† प्रपन्नस्य वर्जनीयानि कीर्तयन्ति ।

---

1. अनुतापे च—पा० क, ग. 2. तद्ज्ञाना—पा० क. 3. संयुक्तः—पा० क. 4. युक्तैश्च—पा० क. 5. वदेद्गुरुम्—पा० क. वदेद्गुरुः—पा० ग. 6. गुरुर्नगर्हयेच्छिष्यम्—पा० क, ग. 7. गुरौ—पा० ग. 8. विद्वेषिणं विद्वान्—पा० ग. 9. प्रक्षालयेत्—पा० ग. 10. कुण्डलितः श्लोकः "क" पुस्तके न दृश्यते ॥ 11. हरिमन्दिरम्—पा० ग. 12. जपादिकं कर्म यन्माल्य—पा० ग.

अन्यत्कार्यं[1] न कुर्वीत वैष्णवो विष्णुमन्दिरे ।
नान्यं देवं नमस्कुर्यात् नान्यं देवं निरीक्षयेत् ॥ ४३ ॥

नान्यं प्रासादमारोहेत् [2]नान्यमायतनं व्रजेत्[3] ।
उद्देशतस्तु द्वात्रिंशदपचारा हरेः स्मृताः ॥ ४४ ॥

[4]पुराणे खलु वाराहे वर्जयेद्वैष्णवस्तु तान् ।
गन्धं पुष्पं तथा वासः भूषणानि [5]पशून् गृहान् ॥ ४५ ॥

तथा [6]भोज्यानि चान्यानि नात्मार्थे वैष्णवो हरेत् ।
कर्तव्याशेषताबुद्धिः नात्मनस्तनयादिषु ॥ ४६ ॥

विष्णोर्विभूतिभूतेषु ममतां वर्जयेत् सुधीः ॥ ४७ ॥

"एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः ।
विष्णुना व्यपदेष्टव्यः तस्य सर्वं स एव हि" ॥ ४८ ॥

नद्यास्तस्यैव नामानि प्रविष्टाया यथार्णवम् ।
सर्वात्मना प्रपन्नस्य [7]विष्णुमेकान्तिनस्तथा ॥ ४९ ॥

[8]छायाविलंघनादीनि न कुर्याच्च [9]सतां सदा ।
[10]सद्भिश्च सह वर्तेत विवादं तेषु वर्जयेत् ॥ ५० ॥

प्रपन्नाननुशास्तीत्थं [11]विष्वक्सेनेशसंहिता ।
* "नावैष्णवग्रन्थरतिः नासच्छास्त्ररतो[12] भवेत् ॥ ५१ ॥

नानृतं शपथं कुर्यात् न च पृच्छेच्छुभाशुभे ।
विषनिर्हरणं चापि[13] पिशाचादिविमोचनम् ॥ ५२ ॥

---

* श्रीविष्वक्सेनसंहितावचनानि समुल्लिखन्ति ।

---

1. कर्म—पा० ग. 2. नान्यत्—पा० क, ग. 3. विशेत्—पा० क, ग. 4. पुराणे वैष्णवस्योक्तान् वैष्णवस्तु समाचरेत्—पा० क. 5. भूषणादि—पा० ग. 6. भोग्ययानि—पा० क. 7. विष्णोः—पा० ग. 8. छायादि—पा० ग. 9. सदा कंचित्—पा० क. 10. सद्भिरेव सहासीत—पा० क. 11. श्रीमच्छेनेश—पा० क, ग. 12. परो—पा० क, ग. 13. एव—पा० ग.

समस्तव्याधिहरणं क्षुद्रमन्त्रैर्न साधयेत्[1] ।
न धारयेज्जटाभारं [2]भस्म चैव न [3]धारयेत् ॥ ५३ ॥

बाह्यलिंगानि सर्वाणि सन्त्यजेद्यावदायुषम् ।
यत्र यत्र हि नीतिस्यात् वैष्णवी शिष्टसम्मिता[4] ।
तत्र तत्रावसेन्नित्यं नान्यत्रेति मतिर्मम ॥ ५४ ॥

न लोकवृत्तिं[5] वर्तेत वृत्तिहेतोः कथञ्चन ।
सत्सम्मता तु या वृत्तिः देशकालानुरूपिणी ॥ ५५ ॥

तामास्थितो[6] न लोभेन हीनां वृत्तिं समाश्रयेत्" ।
व्यासस्तु भगवानाह वर्जनीयं सतामिह ॥ ५६ ॥

* "न शब्दशास्त्राभिरतस्य मोक्षो न चापि [7]रम्यावसधप्रियस्य ।
न भोजनाच्छादनतत्परस्य न लोकवृत्त[8]ग्रहणे रतस्य ॥ ५७ ॥

[9]शिश्नोदरे येऽभिरताः सदैव स्तेयानृता वाक्परुषाश्च नित्यम् ।
व्यपेतधर्मा इति तान्विदित्वा .... .... संपरिवर्जयन्ति ॥ ५८ ॥

एकान्तशीलस्य दृढव्रतस्य पञ्चेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मविद्या[10]रतमानसस्य मोक्षो ध्रुवो नित्यमहिंसकस्य ॥ ५९ ॥

नाभिनन्देत[11] मरणं नाभिनन्देत[12] जीवितम्[13] ।
कालमेव प्रतीक्षेत निर्देशं भृतको[14] यथा ॥ ६० ॥

---

* महाभारतवचनानि दर्शयन्ति ।

---

1, कारयेत्—पा० क. 2. ललाटे भस्मचन्दने—पा० क. 3. चन्दनम्—पा० ग. [4.] सम्मता—पा० ग. 5. वृत्तौ—पा० ग. 6. आश्रितः—पा० क. 7. एव—पा० क, ग. [8.] चित्तग्रहणे—पा० क, ग. 9. श्लोकोऽयं "क" "ख" पुस्तकयोः न दृश्यते ॥ [10.] गतमानसस्य—पा० क. 11, 12, अभिनिन्देत—पा० क. 13, जीवनम्—पा० क. [1]4, कृतकः—पा० ग.

[1]प्रायेणाऽकृतकृत्यास्तु मृत्योरुद्विजिता जनाः ।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥ ६१ ॥

तत्पादभक्तिज्ञानाभ्यां फलमन्यत् कदाचन ।
न याचेत् पुरुषो विष्णुं याचनान्नश्यति ध्रुवम् ॥ ६२ ॥

प्रमादाद्बुद्धितो वाऽपि यदागः क्रियते सताम् ।
अनुतप्तस्तु तानेव क्षामयेन्नान्यथा शमः ॥ ६३ ॥

भगवत्यपचारे[2]ऽपि नैषा[3] शान्तिरनुत्तमा ।
स्त्रीणां स्त्रीसङ्गिनां चैव संसर्गं वर्जयेत् सुधीः ॥ ६४ ॥

तस्मात्सर्वात्मना विद्वान् विषयान्विषवत् त्यजेत् ।
[4]अविद्यः प्राकृतः[5] प्रोक्तो वैद्यो वैष्णव उच्यते ॥ ६५ ॥

[6]अविद्येन न केनापि वैद्यः किंचित्समाचरेत् ।
इति ह्युक्तं भगवता शास्त्रे मन्वादिभिस्तथा ॥ ६६ ॥

तस्मात् प्राकृतसंसर्गं वर्जयेद्वैष्णवोत्तमः ।
एकशय्यासनं पंक्ति भाण्डं पक्वान्नमिश्रणम्[7] ॥ ६७ ॥

याजनाध्यापने [8]यानं तथैव सहभोजनम् ।
नवधा संकरः प्रोक्तो न कर्तव्योऽधमैस्सह ॥ ६८ ॥

* [9](सल्लापस्पर्शनस्वापविधानाऽसनशायनात् ।
याजनाध्यापनाद्यानात् पापं संक्रमते नृणाम् ॥ ६९ ॥

---

* वर्जनीयं नवविधसांकर्यं समुल्लिखन्ति ।

---

1. प्रायशः पापकारित्वात्–पा० क ; प्रायेण कृतकृत्यत्वात् मृत्योरुद्विजते जनः–पा० ग 2. अपराधे––पा० क. 3. सैषा–पा० ग. 4. अवैद्यः–पा० क, ग. 5. स्तब्धः–पा० ग 6. अवैद्येन–पा० क, ग. 7. मिश्रितम्–पा० क. 8. योनिः––पा० ख, ग. 9. कुण्डलितः श्लोकः "क" पुस्तके न ॥

संवत्सरेण पतति पतितेन समाचरन् ।
याजनाध्यापना[1]द्यानात्सहशय्याऽऽसनाऽशनात्[2] ॥ ७० ॥

बृहस्पतिमनुभ्यां तु संकरस्य तु वर्णनम्[3] ।
[4] वैविध्यं याजनादीनां सद्यः पातित्यहेतुता ॥ ७१ ॥

न्यासविद्यैकनिष्ठानां वैष्णवानां महात्मनाम् ।
प्राकृताभिष्टुतिर्निन्दा[5] निन्दास्तुतिरिति स्मृता ॥ ७२ ॥

* "अद्य प्रभृति हे लोका यूयं यूयं वयं वयम् ।
[6] अर्थकामपरा यूयं नारायणपरा वयम् ॥ ७३ ॥

नास्ति संगतिरस्माकं युष्माकं च परस्परम् ।
वयं तु किंकरा विष्णोः यूयमिन्द्रियकिंकराः" ॥ ७४ ॥

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते वर्जनीयपद्धतिः नवमी
श्रीमद्वरदार्यमहागुरुदिव्यचरणावेव शरणम्

---

श्रीः
श्रीमते रामानुजाय नमः
श्रीमते वरदार्यमहागुरवे नमः

## १०. अथ फलोदयपद्धतिः दशमी

एवं प्रपन्ना[7] विष्णोस्तु पादौ तत्त्राणसंज्ञितान्[8] ।
अनुव्रजति तान्विष्णुः[9] अत्यर्थप्रेयविह्वलः ॥ १ ॥

---

* भवच्छास्त्रवचनमुदाहरन्ति ।

---

1. ध्यानात्—पा० क, ग. 2. सहयानात्सहाशनात्—पा० क. 3. वर्णितम्—पा० क, ग.
4. त्रैविध्यम्—पा० ग. 5. निन्दा चाभिष्टुतिर्मता—पा० क. निन्दा स्तुतिरिति स्मृता-पा० ग.
6. अर्धश्लोकोऽयं "नास्तिसंगतिः ......" इत्यत ऊर्ध्वं दृश्यते "ख" पुस्तके ॥
7. श्रीभर्तुः — पा० क. प्रपन्नान् श्रीभर्तुः — पा० ग. 8. संज्ञिकान् — पा० ग.
9. अत्यन्त —पा० क. अत्यन्तं प्रेमविह्वलः—पा० ग.

[1] स्वयं भगवता चोक्तं * "ज्ञानी त्वात्मैव मे मतम्" ।
बहुजन्मसहस्रान्ते दिष्ट्या यस्तु प्रपद्यते[2] ॥ २ ॥

† "वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः" ।
उक्ता शास्त्रे भगवता प्रपन्ने कृतकृत्यता ॥ ३ ॥

[3] तस्मिंश्चानुत्तमा प्रीतिः [4]स्वस्याऽशेषविशिष्टता ।
"विष्णूपायो योऽन्यफलः सोऽधमः परिकीर्तितः ॥ ४ ॥

[5] अन्योपायो विष्णुफलः मध्यमः परिकीर्तितः ।
माधवांघ्रिद्वयोपायो माधवांघ्रिप्रयोजनः ॥ ५ ॥

स उत्तमाधिकारी स्यात् कृतकृत्योऽद्य जन्मनि[6] ।
याः क्रियाः सम्प्रयुक्ताः स्युः एकान्त[7]गतबुद्धिभिः ॥ ६ ॥

तास्सर्वा शिरसा देवः प्रतिगृह्णाति वै[8] स्वयम् ।
"भक्तैरण्वप्युपानीतं प्रेम्णा [9]भूर्येव मे भवेत्[10] ॥ ७ ॥

भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते" ।
भक्तशब्दस्तु[11] मुख्योक्त्या प्रपन्ने पर्यवस्यति ॥ ८ ॥

आत्मीयसंहितायां तु [12]यथा सेनेश उक्तवान् ।
‡ "सेवा तु प्रोच्यते सद्भिः भक्तिशब्देन भूयसी ॥ ९ ॥

सेवा चात्यन्त[13]नीचत्वापत्तिर्हि स्वामिनं प्रति ।
तस्मात्परस्य[14] दास्यैकरसता भक्तिरुच्यते ॥ १० ॥

---

* † गीता ।
‡ विष्वक्सेनसंहितावचनानि दर्शयन्ति ।

---

1. स्वयमुक्तं भगवता—पा० क. एतद्गीतं भगवता—पा० ग. 2. प्रवर्तते—पा० ग 3. अस्मिन्—पा० क. 4. तस्य—पा० ग. 5. अन्योपायाद्विष्णुफलः स मध्यम इर रितः—पा० क. 6. अन्यजन्मनि—पा० क. 7. कृत—पा० क. 8. हि—पा० व 9. तद्भूरि—पा० क. 10. जायते—पा० ग. 11. शब्दस्य मुख्यार्थः—पा० क, ग 12. तदा—पा० क. 13. नीचत्ववृत्तिः—पा० क. 14. अनन्यदास्यैक—पा० ग.

आकिंचिन्यैकशरणाः केचिद्भाग्याधिकाः पुनः ।
लक्ष्मीं पुरुषकारेण वृतवन्तो नरोत्तमाः[1] ॥ ११ ॥

मामेकं शरणं प्राप्य[2] (मामेकं प्राप्नुवन्ति ते ।
एवं मां [3]प्राप्य शरणं वीतशोकभयक्लमाः ॥ १२ ॥

निरालम्बो[4] निराशश्च निर्ममो निरहंकृतिः ।
मामेव[5] शरणं प्राप्य तरेत् संसारसागरम्" ॥ १३ ॥

सत्कर्मनिरताः शुद्धाः सांख्ययोगविदस्तथा ।
नार्हन्ति शरणस्थस्य कलां कोटितमीमपि" ॥ १४ ॥

[6]उपायाधिकृतस्यापि भवेदुत्तरपूर्वयोः ।
अश्लेषश्च विनाशश्च[7] पुण्यपापमयाघयोः ॥ १५ ॥

प्रारब्धदेहभोग्यं तु [8]विना दत्तस्य नश्यति ।
पूर्वाघमुत्तराघं तु मतिपूर्वं महत्तरम् ॥ १६ ॥

आदेह[9]पतनाद्वृत्तम् अनुतापविवर्जितम् ।
यत्तद्विनैवा[10]ऽऽश्लेषस्स्यात् अन्यस्याघस्य युक्तितः ॥ १७ ॥

अयमर्थो भगवता सविशेषमुदीरितः ।
* "उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी ॥ १८ ॥

साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी" ।
उपायभक्तिरित्युक्तो भक्तियोगो हि [11]साङ्गकः ॥ १९ ॥

---

*

---

1. अनघा नराः—पा० क, ग. 2. कुण्डलितो भागः "क" पुस्तके न ॥ 3. शरणं प्राप्य—पा० ग. 4. निराशी—पा० क, ग. 5. एकम्—पा० ग. 6. उपायाधिगमस्याथ—पा० क. 7. पापपुण्यमय—पा० ग. 8. फलभोगादिनश्यति—पा० क. 9. पाताद्वृत्तम्—पा० क, ग. 10. विनावाश्लिष्टं स्यात्—पा० क, विनैवाश्लेषस्स्यादनन्याघस्य युक्तितः—पा० ग. 11. अत्र—पा० क, ग.

बहुदेह[1]निमित्तं हि प्रारब्धाघं न[2] नाशयेत् ।
साध्यभक्तिरिति प्रोक्ता प्रपत्तिर्मोक्षरूपिणी[3] ॥ २० ॥

आर्तानां भूयसी साऽपि[4] प्रारब्धमपि नाशयेत् ।
प्रारब्धदेहभोग्यं तु[5] दृप्तस्याघं न नाशयेत् ॥ २१ ॥

एतदुक्तं भवत्यत्र भक्तियोगा[6]द्विमुच्यते ।
प्रारब्धकर्म[7]निर्मोके बहुजन्मोपभोगतः ॥ २२ ॥

कर्मणश्शोकहेतोस्त्वां "मोक्षयिष्यामि मा शुचः" ।
एवं भगवतोक्तत्वादेतद्देहेऽपि शोचनात्[8] ॥ २३ ॥

आर्तस्य सद्यो मुक्तिः स्यात्प्रपत्तिर्भूयसी यतः ।
दृप्तः प्रारब्धदेहात्तु[9] न शोचति यतः[10] स्वयम् ॥ २४ ॥

देहान्ते मुच्यते सैषा मोक्षकालव्यवस्थितिः ।
सोऽयं[11] श्रियःपत्युरन्तर्हृदयाम्भोजवासिनः ॥ २५ ॥

[12]प्रसादेनैव [13]सुसुखं नाडीं भित्वा[14]शताधिकाम् ।
[15]सद्यस्तयोर्ध्वमुत्क्रम्य गत्वा ता[16]नातिवाहिकान् ॥ २६ ॥

अर्चिरादीन् स तैर्नीतः [17]प्रीतियुक्तैः[18] पदेपदे ।
अमानवकरस्पर्शात् सूक्ष्मदेहं[19] विसृज्य च[20] ॥ २७ ॥

विरजां मनसा तीर्त्वा ब्रह्मगन्धादिलाञ्छितः[21] ।
सालोक्य[22]मथ [23]सारूप्यं सामीप्यं च क्रमाद्व्रजेत्[24] ॥ २८ ॥

---

1. देहि—पा० ग. 2. प्रारब्धं न स—पा० क, ग. 3. मोक्षकांक्षिभिः—पा० ग
4. तु—पा० ग. 5 यत्—पा० ग. 6. योगे प्रमुच्यते—पा० क; योगात्प्रमुच्यते—पा० ग
7. कर्मणि क्षीणे—पा० क, ग. 8. अनुशोचनात्—पा० क. 9. देहे तु—पा० क देहान्तम्—पा० ग. 10. ततः—पा० क. 11. श्रियः पतेः—पा० क. 12. प्रसादादेव—पा० क, ग. 13. सुमुखाः—पा० ग. 14. गत्वा-पा० क. 15. ततः—पा० क 16. अतिवाहिकान्—पा० क, ग. 17. प्रिय—पा० क. 18. युक्तः—पा० ग. 19. हि मुच्य—पा० क, ग. 20. सः—पा० ग. 21. लाभतः—पा० क. 22. अपि—पा० क 23. सामीप्यं सारूप्यम्—पा० क, ग. 24. भजन्—पा० ग.

सायुज्यं [1]चाधिगच्छेत ब्रह्मणा सह सर्वशः ।
* अनुसञ्चरन्निमान् लोकान् कामान्नी कामरूप्यपि ॥ २९ ॥

साम गायन् [2]किंकुरुते सूरिभिस्सह सर्वदा ।
यद्वाऽर्चिरादिमार्गेण[3] विलम्बमसहन्निव ॥ ३० ॥

प्रपन्नं हरति क्षिप्रं यथेष्टमिति [4]च श्रुतम् ।
महावराहो भगवानेतत्संवादकं वचः ॥ ३१ ॥

यदाह देव्यां शृण्वन्त्यां भूम्यां [5]प्रवदतां वरः ।
† "स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः ।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् ॥ ३२ ॥

ततस्तं म्रियमाणन्तु काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥ ३३ ॥

यदाकदाचित् वातादिधातुसाम्यादरोगतः[6] ।
मनस्स्थितिस्सम्भवति यः कश्चित्तु तदा नरः ॥ ३४ ॥

स्मरेत् स्वामित्व[7]सौशील्यवात्सल्यादिमहोदधिम् ।
अवतीर्णं वराहं मां श्रिया दीप्तगुणैर्युतम्[8] ॥ ३५ ॥

नारायणं विश्वरूपमजमिच्छात्त[9]विग्रहम् ।
"श्रीमन्नारायणस्वामिन्! अनन्यशरणस्तव ॥ ३६ ॥

---

* कामान्नी कामरूप्यनुसञ्चरन्, एतत्सामगायन्नास्ते हा उ हा उ हा उ.
† वाराहचरमम् ।

---

1. चाश्नुते कामान्—पा० क, ग. 2. समाश्लिष्टः—पा० ग. 3. मार्गादि—पा० क, ग. 4. अपि—पा० ग. 5. भूमिभृतांवरः—पा० क. 6. धातुसाम्यत्वलाभतः—पा० क. 7. वात्सल्यसौशील्यादिगुणैर्युतम्—पा० क, वात्सल्यसौलभ्यादिगुणैः—पा० ग. 8. गुणोदयम्—पा० क; गुणोज्वलम्—पा० ग. 9. आत्त—पा० ग.

चरणौ शरणं यातः" [1]इति मां यस्स्मरेत् सकृत् ।
ततस्तमितरोपायव्यवधानविवर्जितम् ॥ ३७ ॥

तदवस्थं [2]मृतिप्राप्तौ काष्ठपाषाणसन्निभम् ।
काष्ठवत्तु स्वतोदेहे[3] मनश्चेष्टाविवर्जितम् ॥ ३८ ॥

[4] परप्रबोधासज्ञं तु विलुप्तहृदयं ततः ।
[5] आत्मवत् स्वयमन्यैश्च हितस्मरणवर्जितम् ॥ ३९ ॥

आश्रितेषु प्रसुप्तेषु पुरुषो यो [6]व्यवस्थितः ।
कामं कामं निर्ममाणः तेषां जागर्ति सिद्धये ॥ ४० ॥

सोहमाश्रिततन्त्रात्मा स्मरामि च तदा स्वयम् ।
[7] इमं मद्भोगयोग्यं तु कृपापूर[8]प्रकाशनात् ॥ ४१ ॥

नयामि परमं स्थानम् अर्चिरादिगतिं विना ।
गरुडस्कन्धमारोप्य यथेष्टमनिवारितः" ॥ ४२ ॥

[9] (एत[10]त्प्रभावयुक्तस्य प्रपन्नस्य तु पार्श्वतः) ।
अपयान्ति [11]द्रुतं भीताः पाशिनो यमकिंकराः ॥ ४३ ॥

अयं न कस्यचिद्भृत्यः पराशरशुकौ यथा ॥ ४४ ॥

[12] विष्णुपुराणे :—

"स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ ४'५ ।

---

1. तथैवास्म्यहमच्युत—पा० ग. 2. मृतिं प्राप्तम्—पा० क. 3. देहम्—पा० ख देहगुणचेष्टादि—पा० ग. 4. परे प्रबुध्य—पा० क. 5. अस्मवत्स्वयमन्यच्च । 6. ह स्थितः—पा० क. 7. तं तु—पा० क; मद्योगयोग्यभोग्यं तम्—पा० ग. 8. रूप—पा० ख 9. कुण्डलितो भागः "क" पुस्तके न ॥ 10. एवम्—पा० ग. 11. ध्रुवम्—पा० ख 12. एतन्न दृश्यते "क" "ख" पुस्तकयोः ।

* (सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहुः
योो मां मुकुन्द नरसिंह जनार्दनेति ।
जीवो जपत्यनुदिनं मरणेप्यृणीव
पाषाणकाष्ठसदृशाय ददामि मोक्षम् ॥)

श्रीभागवते

देवर्षिभूतात्मनृणां पितॄणां न
किंकरो नायमृणी च राजन् ।
सर्वात्मना यः [1]शरणं शरण्यं
नारायणं लोकगुरुं प्रपन्नः ॥ ४६ ॥

उपसंहारः

त्रैयन्तस्मृतिमुख्य[2]सन्मुनिवचः श्रीपांचरात्राचल-
क्षोदैः संघटितः प्रपन्नचरितः क्षीराब्धिसेतुर्महान् ।
ये वाञ्छन्त्यमुना [3]पथाऽऽप्तुमचिरात् पारं भवाम्भोनिधेः
ते पूर्वोत्तर[4]पापकर्मनिचयैः मुक्ता विमुक्ताः स्मृताः[5] ॥ ४७ ॥

कार्पण्याचित[6]बद्धमूलफलका विश्वासकीलाचिता
याञ्चाबन्धनरज्जु[7]कृष्टिवशगा निक्षेपसंक्षेपणिः[8] ।
संसारार्णवतारिणी[9] तनुभृतां[10]न्यासात्मनौः तामिमाम्
अच्छिद्रामथ पारयिष्णु[11]मभयाः संद्योऽधिरुढा जनाः ॥

---

* कुण्डलितो भागः "क" "ख" पुस्तकयोर्न दृश्यते ॥

---

1. वः—पा० ग. 2. तन्त्रवचसां संवादिभिस्सद्वचः क्षोदैः—पा० क. 3. तथा—पा० ग. 4. कर्मसागरभयात्—पा० क, ग. 5. ध्रुवम्—पा० क, ग. 6. अनति—पा० क; आनत—पा० ग. 7. कर्षि—पा० क, ग. 8. संक्षेपिणी—पा० क, सत्क्षेपणी—पा० ग. 9. तारणे—पा० क; तारणी—पा० ग. 10. सन्न्यासशास्त्रम्—पा० क, सन्न्यासनौः—पा० ग. 11. पारयिष्णुरथयात्—पा० क.

अशेषापेक्षितं यत्र परितो जायते सताम् ।
प्रपन्नपारिजाताख्यः प्रबन्धः [1]कथितो भुवि ॥

सर्वं आचार्यार्पणमस्तु ।

इति श्रीवात्स्यवरदाचार्यमहागुरुभिरनुगृहीते
प्रपन्नपारिजाते फलोदयपद्धतिः दशमी
श्रीमद्वरदमहागुरुदिव्यचरणनलिने एव शरणम्



1. पठितो—पा०